ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**३४ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २००९ ई०**

प्रधानसम्पादकः
**प्रो० वाचस्पति उपाध्यायः**
कुलपतिः

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**



प्रकाशन-स्थलम्

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

विदन्त्येव भौमाः सुमनसो यदिदं संस्कृतं न केवलं भाषा, न वै तद्गतं ज्ञानं भौतिकमेव वस्तु विज्ञाप्य विरमति, अपितु तपःस्वाध्यायसमेधितेयं काचिदनादिर्दैवी वाक् स्वसंश्रयेऽनादिकालात् संस्कृतिं परम्परां चाविरतं पुष्णन्ती विस्फुरति, विविधानवद्यविद्याभिरक्षय्यपाथेयतां भजमानां मानवजीवने शाश्वतं मूल्यमादधानात्मस्वरूपं समक्षयति प्रापयति च । स्ववैभवगरिम्णा भारतं भारतत्वेन परिचाययति। अतो राष्ट्रियसम्पदोऽस्या अधिगमो न भौतिकोन्नतये, अपितु सर्वभावेन दायित्वपुण्याधायकं स्वरूपोपलम्भकम् अमृतेनात्मसन्तर्पणम्, उपेक्षणं चास्याः संश्रुतव्रतभ्रंश इव महत्पातकं स्वात्महननमिव जघन्यं घोरे तमसि निमज्जनम्।

यथैतदीयविद्यानां तदीयभव्यभावानां न इयत्ता तथैव स्वाध्यायशीलानां संस्कृतमनीषिणां व्युत्पत्तिमता-मन्तेवासिनां च शास्त्रचिन्तनावसरे प्रतिवाक्यं न समानोऽर्थप्रकाशः। स ह्येकं वस्तु लक्ष्यीकृत्य युगपत्प्रवृत्तानामपि प्रत्यात्मनियतसंस्कारभेदाच्चित्तशुद्धितारतम्यादाहितविवेचनसामग्रीबहुश्रुतत्त्वपरिशीलन-पाटवादिभूमिकावैविध्यात् तत्त्वोन्मुखमेधासंस्फूर्तिप्रकर्ष-वैभिन्न्याच्च भिद्यते। अतश्च स्वतःसिद्धस्यापि अनुभवस्य महनीयाचार्यसन्निधौ शास्त्रनिकषोपले सत्यापनं युज्यते। कदाचिच्च भगवदनुकम्पया गहनं प्रविष्टानां ज्ञायतेऽदृष्टश्रुतपूर्ववस्तुनो बुद्ध्या संस्पर्शः। यश्च चिन्तकात्मानं चमत्कृत्य अहोभावेन पूरयति, जले तैलपातन्यायेन चित्तं विशदय्य गौरवाकुलं कुरुते, कदाचिदञ्जसैवातिटीकं रहस्यमालोकयति प्रतिभा तन्निमग्नचेतसाम्।

एकतः केचन शास्त्रमप्रविश्य अमूलमाडम्बरमिव किमपि शास्त्रमन्यथयन्तो व्यथयन्तो लक्ष्यन्ते, अपरतो मूलाग्रहेण तद्वाक्यविचारेणाप्रमत्तं जाग्रति केचन शास्त्रसंरक्षणसौविदल्लाः। तादृशानां शास्त्रचिन्तनरसिकानां मूले परिश्रान्तवतां छात्रान् विनयतां चिन्तितविषयाणां समाकलनेन यथा विद्यासमृद्धिर्न तथाऽन्यथा। दिष्ट्या तेषामेव ग्रन्थग्रन्थिविमोककुशलानां पङ्क्तिपण्डितानां यथावत् समीक्षणप्रवणानां चानवद्यप्रज्ञाप्रसूतमुपादेयधिया सङ्कलय्य तदधिजिगांसमानेभ्यो वितरीतुमियं प्रक्रमते पत्रिका शोधप्रभा।

या बहुधा विमृश्य लेखनव्रतिनां तथाविधानां प्रसादादेव स्वसङ्कल्पं पिपर्त्ति, सेयं समुपात्तलेख-सुमनोभिः सुमनसः सामोदं समर्चयितुमुपगता समुदारकटाक्षमोक्षेण सङ्कलनीयेति भावयति।

**प्रो० वाचस्पति उपाध्यायः**
कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

संसारेऽस्मिन् यत्किमपि ललितं सुन्दरं हृदयावर्जकं विलसति तत्सर्वं भगवत्याः सरस्वत्याः विलासविजृम्भितमेव। फलतः वेदादारभ्य अद्यतनवाङ्मयं यावद् सर्वत्र भगवत्याः सरस्वत्याः महिमा वर्णितो दृश्यते। ऋग्वेदे यज्ञस्य साफल्यं कामयमानः ऋषिः सरस्वतीं स्तौति यत्-

**पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः।।** ऋ.१.३.१०

भगवत्याः वाग्देव्या अनेकानि विविधगुणद्योतकानि नामानि सन्ति। तेषु शुभ्रवर्णा, शुक्लाम्बरधरा, श्वेतहंसवाहना, श्वेतपद्मासना प्रभृतीनि नामानि सत्त्वप्राधान्यव्यञ्जनपराण्येवेति वक्तुं शक्यते। काव्यादर्शस्य मङ्गलाचरणे सरस्वतीं स्तुवन्दण्डी प्रार्थयते यत्-

**चतुर्मुख-मुखाम्भोज-वनहंसवधूरिव।**
**मानसे रमतां नित्यं सर्वशुक्ला सरस्वती।।** काव्यादर्श १.१

वीणापुस्तकमालाधारिणी निखिल-कलायाः अधिष्ठात्री देवता शास्त्राभ्यासपरायणानां मन्दमतिमतां प्रतिभाविशेषविरहितानामपि समुपासकानामवश्यमेव कल्याणं विदधाति। भगवत्याः प्रसादं विना न दृश्यते वैचक्षण्यलाभः कोऽपि। समुपासिता वागेव अव्युत्पत्तिजनितदोषच्छादयित्रीं शक्तिं वितनोति । प्रोक्तं यथा दण्डिना-

**न विद्यते यद्यपि पूर्ववासना-गुणानुबन्धि प्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्।।** काव्यादर्श १.१०४

एवं श्रुतेन यत्नेन चोपासिता भगवती विवेकं जनयति येन शास्त्ररहस्यं स्वत एव प्रकाशितं भासते सरस्वतीसमुपासकानां हृदि। अन्यथार्थावबोधं विना पाठमात्रपरायणाः सुधियो मण्डपस्तम्भ इव शास्त्रभारं वहन्ति। वस्तुतो विवेकवतामर्थानुसन्धायिनामेव चतुरस्रं भद्रम्। अत एव विवेकलाभाय वाग्देवता यत्नतः समुपासनीया। प्रोक्तं यथा निरुक्तकारेण-

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते, नाकमेति ज्ञानविधूतपाप्मा।।** निरुक्त १.१८

३४ वर्षे अङ्केस्मिन् विविधविषयविश्लेषपराः द्वादशलेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थते सुमनसः विदुषः।

**प्रो० रमेशकुमारपाण्डेयः**
सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

# परमात्मा-श्रीपारमात्मिकोपनिषत्

**डॉ. वेदान्तं श्रीविष्णुभट्टाचार्यः**

श्रीमन्नारायणः सर्वदेवतास्वरूपः ईश्वरः विश्वरूपः श्रीवेङ्कटेश्वरः अर्चारूपः अन्तर्यामी ज्योतिस्वरूपः प्रणवरूपः आनन्दरूपः सर्वलोकाधिपः उत्कृष्टः पुरातनः लोकानां श्रेष्ठः सुसूक्ष्मः सर्वहितः अणूनाम् अणुः विभूनां विभुः ज्योतिषां ज्योतिः ऐश्वर्यरूपः वृषभाचलवासी क्रीडात्मकः कामप्रदः सर्वैश्वर्यवान् मङ्गलप्रदः आकाशात्मा वाय्वात्मा प्रकृत्यात्मा ह्लादात्मा कामात्मा ब्रह्मात्मा सर्वकारणात्मा पुरुषश्च इत्येवं नैकविधैः स्वरूपैः परमात्मा नानाविधदुःखपरम्परावाहिनि क्लिश्यमानं जीवजातं समुद्धरति संरक्षति च इति विष्णोर्वैशिष्ट्यम् उपपादयन् वैखानसभगवच्छास्त्रसिद्धान्त - व्याख्यान-संहिताग्रन्थेषु प्रधानतमत्वेन राराजति श्रीपारमात्मिकोपनिषन्नामकः ग्रन्थः।

उपनिषत्सु वर्तते प्रधानतया इयं श्रीपारमात्मिकोपनिषत्। वैदिकवाङ्मये अनेकाः उपनिषदः सन्त्यपि काश्चन प्रसिद्धाः काश्चन अप्रसिद्धाः लोके वर्तन्ते। तत्र उपनिषत् नाम उप-उपगम्याचार्यम् उपलभ्य वा ब्रह्मोपदेशं निः निश्शेषेण नितरां वा सत् अवसादयित्री या पराविद्या सा उपनिषद् भवेत्।

अध्यात्मविद्यां सरलमार्गेण समुपदिश्य ज्ञानपिपासूनां जिज्ञासूनां च दुस्तरस्य संसारसागरस्य पारं नीत्वा उपनिषच्छब्दः स्वार्थसार्थकं करोति।

ज्ञानप्रतिपादका इयम् उपनिषत् ब्रह्मविद्यारहस्योद्घाटनकारिणी विवेकवैराग्याभ्याम् अविद्याध्वांतध्वंसकारिणी त्रिविधदुःखप्रशमनकारिणी अखिलभवभयहारिणी ब्रह्मानन्दप्रदायिनी च भवति।

विष्णोः स्वरूपवर्णनप्रतिपादनावसरे विशिष्टं स्थानं प्राप्य कृष्णयजुश्शाखान्तर्गता श्रीपारमात्मिकोपनिषत् वैखानसवाङ्मये सुप्रसिद्धा भवति। इयं च उपनिषत् अधिकतया वैखानसार्चकैरेव पठन - पाठन - पारायण - होमकर्मसु उपयुज्यते।

श्रीविखनोमुनिना प्रणीतात् श्रीवैखानसकल्पसूत्रनामकग्रन्थात् प्राचिनतमः ग्रन्थः अयम्। इयं च उपनिषत्, उपनिषदन्तर्गताः मन्त्राश्च, श्रीमन्नारायणस्य मुखारविन्दात् विनिस्सृताः अपौरुषेयाः, वैखानसब्राह्मणानां प्रधानतमाः, वैखानससाहित्यस्य आधारभूताश्च भवन्तीति वक्तुं नैव संशीतिलेशः।

**परमात्मा - श्रीपारमात्मिकोपनिषत्** इत्यस्मिन् शोधलेखे श्रीपारमात्मिकोपनिषदः स्वरूपं, श्रीपारमात्मिकोपनिषदः भाष्यं, श्रीपारमात्मिकोपनिषदः स्थानं, श्रीमहाविष्णोः स्वरूपं, मन्त्रविनियोगः इत्येते अंशाः यथामति मया अत्र प्रस्तूयन्ते। तत्र आदौ।

**श्रीपारमात्मिकोपनिषदः स्वरूपम्–**

श्रीपारमात्मिकोपनिषत् एकादशानुवाकैः सहिता वर्तते। एकैकस्मिन् अनुवाके दश दश मन्त्राः विद्यन्ते। अन्तिमे एकादशानुवाके पञ्चमन्त्राः एव विद्यन्ते। एकैकः मन्त्रः एकैकः देवतापरः। एकैकस्य मन्त्रस्य तस्य देवस्य च चतुर्मूर्तिनाममन्त्राः अपि पण्डितैः सङ्कलनं क्रियते। एतैः चतुर्मूर्तिमन्त्रैः सह उपनिषन्मन्त्रा अर्चनादिहोमकर्मसु विनियुज्यन्ते।

**श्रीपारमात्मिकोपनिषदः भाष्यम्–**

अद्य सर्वतन्त्रस्वतन्त्रेण कौशिकगोत्रजेन गोविन्दाचार्यसूनुना दशमशताब्दीयेन श्रीश्रीनिवासविदुषा लिखितं भाष्यमेकं सुप्रसिद्धं श्रीपारमात्मिकोपनिषदः लभ्यते। अयं च श्रीनिवासदीक्षितः वैखानसविद्वल्लोकस्य पूजनीयः वन्दनीयश्च। भाष्यस्यास्य विवरणरूपा चन्द्रिका नाम व्याख्या एका अपि इदानीम् उपलभ्यते। चन्द्रिकायाः निर्माता श्रीसुन्दरराजसूरिः अयम् एकोनविंशतिशताब्दीयः वैखानसपण्डितश्च। अस्याः उपनिषदः भट्टभास्करीयपाठः तस्य व्याख्यानमपि एकं प्रसिद्धं वर्तते।

पारमात्मिकोपनिषदः अन्तर्गतानां मन्त्राणां विवरणपरः भाष्यव्याख्यासहितग्रन्थः आन्ध्रदेशे वैखानसपण्डितैः विद्वद्भिश्च बहुवारं मुद्राप्य लोकार्पणं च क्रियते।

वैखानससाहित्यविज्ञानां सर्वस्वरूपः वैखानसजनानां प्रामाणिकरूपः अत्यन्तमूर्धन्यभूतः अयं भवतीति वक्तुं नैव संशीतिलेशः।

**श्रीपारमात्मिकोपनिषदः स्थानम्–**

वैखानसागमग्रन्थेषु प्रसिद्धा इयं पारमात्मिकोपनिषत् विविधानां देवतानां वैशिष्ट्यं तेषां ध्यानं, महिमा च निरूप्यते। अस्यां मत्स्य-कूर्म-वराह-नृसिंह-वामन-परशुराम-श्रीराम-बलराम-कल्कीति दशानाम् अवताराणाम् आत्मादीनां पद्मनाभादीनां रूपाणाम् अर्चारूपस्य श्रीवेङ्कटेश्वरस्य हयग्रीवस्य च देवतानां मन्त्राणां सङ्कलनम् अस्याम् उपनिषदि वर्तते। सर्वदेवतामन्त्ररूपा इयम् उपनिषत् भवसागरसन्तरणोतायनिरूपणपरा च विद्यते। तस्या वर्णिताः देवाः सन्ति ते सर्वेऽपि श्रीमहाविष्णोः प्रतिरूपाः एव भवन्तीति अनया ज्ञायते।

पञ्चोत्तरशतमन्त्रप्रयुक्तसहिता इयम् उपनिषत् वैखानसग्रन्थेषु अन्यन्तं प्रधानस्थानमावाहतीति वक्तुं नैव भेदः।

श्रीश्रीनिवासदीक्षितविरचितस्य श्रीलक्ष्मीविशिष्टाद्वैतभाष्यस्य श्रीपारमात्मिकोपनिषद्ग्रन्थः प्रधानाकारोऽपि भवति।

अस्मिन् भाष्ये परब्रह्मणः स्वरूपनिरूपणप्रसङ्गे जीवस्य वर्णनसन्दर्भे प्रकृत्याः निरूपणप्रतिपादने भगवत्प्रपत्तिविषये अस्याम् उपनिषदि विद्यमानाः मन्त्राः एव प्रधानाकराः भवन्ति। श्रीपारमात्मिकोपनिषदि विद्यमानानां मन्त्राणां समन्वयमेव श्रीलक्ष्मीविशिष्टाद्वैतभाष्यमिति वक्तुं शक्यते।

**श्रीमहाविष्णोः स्वरूपम्–**

श्रीमहाविष्णुः सर्वेषां लोकानाम् अधिपः उत्कृष्टः पुरातनः लोकानां श्रेष्ठश्च। असौ च तावत् सुसूक्ष्मः सर्वहितः सर्वेषां अन्तरात्मा स्थावराणां स्थावरः जङ्गमानां जङ्गमः विभूणां विभुः विभवस्य उखवः इति।

**विष्णुस्सर्वेषामधिपतिः परमः पुराणः।**
**परो लोकानामजितो जितात्मन् भवते भवाय॥ १-१**

स एव अणोः अणीयान् आकाश-भू पर्वतादिभ्यः महीयान्। जीवस्य हृदयगुहायां निहितः वीतशोकः अयम् अन्तर्यामी च भवति।

सूर्यचन्द्रादीनां ज्योतिः नक्षत्रादीनां ज्योतिः सत्वात्मकः सत्वरूपः अयमेव विष्णुः ज्योतिस्स्वरूपः, आदित्यमण्डलमध्यवर्ती शब्दब्रह्मरूपः परंब्रह्मा परंज्योतिः प्रणवरूपः भवेदिति, क्रीडाप्रदः कामप्रदः आनन्दरूपः ऐश्वर्यरूपः भक्तवत्सलः नित्यैश्वर्यरूपः रक्षकश्च भवतु इति च–

**रयीणां पतिं बृहन्तं रारागमुक्तं गुरुं सनीकं।**
**तं रायो रूपं रयिभूतभूतं रयिमत्सुरमित्रे॥** ७-९

इत्यस्मिन् मन्त्रे निरूप्यते।

परमात्मा श्रीमन्नारायणः बहुधा विराजते। अयं सर्वान्तर्यामी सर्वान्तरात्मा च। तस्य आत्मनः लक्षणं सुस्पष्टं वर्णते पारमात्मिकोपनिषदि। स च आत्मा बहुविधः भवेत्। तद्यथा–

| आत्मा | मन्त्रः | आकारः |
|---|---|---|
| आकाशात्मा | यो वा गविष्ठः परमः प्रधानः | २-१ |
| वाय्वात्मा | ये वा वायुर्द्विगुणोऽन्तरात्मा | २-२ |
| अग्न्यात्मा | त्वमग्ने त्रिगुणो वरिष्ठः | २-३ |
| आपोऽन्तरात्मा | त्वं जीवस्त्वमापस्सर्वेषाम् | २-४ |
| पृथिव्यात्मा | भूमेर्वितन्वन् | २-५ |
| मनस्तत्त्वात्मा | मनस्त्वं भूत्वा प्रतरन् | २-६ |
| बुद्धितत्त्वात्मा | त्वं बुद्धिर्भूतानामन्तरात्मा | २-७ |
| अहङ्कारात्मा | यस्सूक्ष्मान् सञ्चरमाणान् | २-८ |
| प्रकृत्यात्मा | यस्य वा भयाद्भगवानुत्तस्थे | २-९ |
| मायात्मा | यं त्वां सर्व पालनायाभिभूतं | २-१० |
| ह्लादात्मा | यस्त्वं भूत्वा पर्जन्यो | ३-१ |
| कामात्मा | कामो भूत्वा प्रजानाम् | ३-२ |

| | | |
|---|---|---|
| **कारणात्मा** | **अङ्गादङ्गादनुप्राविशत्** | **३-३** |
| **मोहात्मा** | **यो मोहयन्भूतानाम्** | **३-४** |
| **दशावतारात्मा** | **यो वा दशात्मा उपरि** | **३-५** |
| **ब्रह्मात्मा** | **यस्यैता ब्रह्ममूर्तयो** | **३-१०** |
| **वेदान्तरात्मा** | **वाको वा अनुवाको** | **४-१** |
| **सत्वात्मा** | **सत्योज्योतिस्सत्या** | **४-१०** |
| **सर्वकारणात्मा** | **तमस्सर्वभूत मधु** | **१०-४** |
| **अमृतात्मा** | **अंराजिमन्तं सकलस्य** | **११-४** |

एतेषाम् आकाशात्मादीनां लक्षणानि तत्तन्मत्रेषु यथा उपासकानां योग्यः तथा विस्पष्टं निरूप्यते अस्यामुपनिषदि। एते सर्वे आत्मानः श्रीमहाविष्णोः प्रतिरूपाः अवतारमात्राः श्रीमहाविष्णोराज्ञया प्रवर्तमानाः एव विद्यन्ते।

हयग्रीवस्वरूपं, नृसिंहलक्षणानि पञ्चभूतात्मकः श्रीमन्नारायणः पुरुषसत्य-अच्युत-अनिरुद्ध-पुण्य-सुवहादीनां वैशिष्ट्यं स्पष्टतया अस्यां पारमात्मिकोपनिषदि वर्ण्यते।

**मामात्मगुप्तां सत्यस्य सर्वस्य।**
**वितानरूपां सञ्जूजुषन्तीं परमां पवित्राम्॥** ११.५

मन्त्रेऽस्मिन् मा आत्मगुप्ता ज्ञानस्य सर्वस्य आच्छादनरूपा योगिनां हृदयेषु स्थिता परमा पवित्रा सन्तारयन्ती शुद्धा अप्रमत्ता पुरुषकारभूता लक्ष्मी इति लक्ष्म्याः स्वरूपं विशिष्टतया अस्याम् उपनिषदि विव्रियते।

परमपुरुषरञ्जनप्रदा शोभना कीर्तिमती या लक्ष्मी अस्ति सा माम् अवतु। सा अस्मान् सन्ततधारा प्रवाहजलैः सिञ्चतु। इयं लक्ष्मी शतसहस्रादिपुत्रपौत्रान् ददातु। तापत्रयपरिभवभूतोऽहं तां शरणागतिं व्रजामि इत्यपि पारमात्मिकोपनिषदि वर्ण्यते।

**द्वावेतौ पक्षी अचरं चरन्तौ नाधुरं व्यधुनीते। यश्चैकं भुनक्ति भोक्त्रे॥** ४-२

इत्यस्मिन् मन्त्रे शरीरे स्थितौ जीवात्मपरमात्मानौ पक्षिसदृशौ भवतः।

परमात्मा जीवस्य धुरं न वहति। प्रकृतिकर्मफलमनुभोक्तुमेव जीवं प्रेरयति च परमात्मा।

जीवः परमात्माधीनोऽपि स्वकर्मानुसारं पुण्यपापफलानि अनुभवतीति तत्र परमात्मा शरीरेषु साक्षिमात्रेण तिष्ठतीति च संसूच्यते।

**मन्त्रविनियोगः–**

विग्रहप्रतिष्ठा-अर्चन-स्वपन-उत्सव-प्रायश्चित्तादिकर्मसु पारमात्मिकोपनिषदि विद्यमानैः मन्त्रैरेव होमः कार्यः इति एतेषां मन्त्राणां होमेन विग्रहशक्तिः दिनदिनाभिवृद्धिर्भवतीति च न्यूनातिरिक्तदोषाणां निवारणं च स्यादिति भृगु-मरीचि-अत्रि-कश्यपैः ऋषिभिः स्वीय अधिकारसंहिताग्रन्थेषु उपदिश्य-ते।

**उपसंहारः –**

अस्माभिः ज्ञायते यत् इयं च पारमात्मिकोपनिषत् वैष्णवोपनिषत्सु मुख्यतमा विष्णोः स्वरूपवैभवप्रतिपादने विशिष्टा उन्नता वैखानसभगवच्छास्त्रोक्तरीत्या क्रियमाणबिम्बप्रतिष्ठार्चनादिकर्मसु प्रधानतमा च विराजते इति। उपनिषद्ग्रन्थः अयं सर्वैः अध्ययन-अध्यापन-यजन-याजनकर्मसु अवश्यं विनियोगरूपः भवतु इत्याशास्य विष्णोः वैभवप्रतिपादनद्वारा सर्वे आर्षधर्मजिज्ञासवः वैष्णवाग्रेसराः भवन्तु इति च संप्रार्थ्य विरम्यते।

।। तद्विष्णो परमं पदम् ।।

**अनुशीलितग्रन्थाः**

**काश्यपज्ञानकाण्डः**
तिरुमलतिरुपतिदेवस्थानानि
तिरुपतिः
१९९८

**क्रियाधिकारः**
तिरुमलतिरुपतिदेवस्थानानि
तिरुपतिः
१९८४

**विमानार्चनाकल्पः**
श्रीवैखानसग्रन्थमाला
ईगावारिपालेम्
१९२७

**श्रीपारमात्मिकोपनिषद्भाष्यम्**
श्रीवैखानसभगवच्छास्त्रग्रन्थमाला
नखूरु
१९४८

**समूर्तार्चनाधिकरणम्**
तिरुमलतिरुपतिदेवस्थानानि
तिरुपतिः
२००१

# व्याकरणदर्शने विवर्तः परिणामो वेति विमर्शः

डॉ॰ सुबोधशर्मा

अत्र विषयेंऽशद्वयं विचारणीयमास्ते। व्याकरणशास्त्रस्य दर्शनत्वमिति प्रथमः, तत्र विवर्तवादः स्वीक्रियते उत परिणामवाद इति द्वितीयोंऽशः। तत्र दृश्यते-आत्मतत्त्वं ब्रह्मतत्त्वं शब्दतत्त्वं वा विचार्यते येन तद्दर्शनम्। अन्ततश्च ब्रह्मविचारसाधकतमं दर्शनपदव्यपदेश्यमिति फलति। शास्त्रशब्देनापि प्राय एतदेवोच्यते- शिष्यते=अनुशिष्यते=हितमुपदिश्यतेऽनेनेति शास्त्रमिति व्युत्पत्तेः सम्भवात् योगरूढ्या च आत्मतत्त्वाऽबोधकं शास्त्रं दर्शनपदेन प्रसिद्ध्यति।

तच्च दर्शनं नास्तिकास्तिकभेदभिन्नं सन्नानाविधम्। तत्र चार्वाकैकान्तिकानैकान्तिकानि प्रसिद्धतया त्रिधा विभक्तानि नास्तिकदर्शनानि। आस्तिकदर्शनं तु बहुविधं सदपि षडेव प्रसिद्धिमागतम्- न्यायवैशेषिकसांख्ययोगमीमांसावेदान्ताभिधम्। षड्दर्शनेषु व्याकरणस्य गणना नास्ति। अत एव प्रसिद्धिमागताः दार्शनिकाः व्याकरणस्य दर्शनत्वे सन्दिहाना भवन्ति।

यत्र शास्त्रे अध्यात्मविषयाः प्राधान्येन प्रतिपादिता भवन्ति, तदेव शास्त्रं दर्शनं भवति। प्रसङ्गाच्च लौकिकाः विषया आयान्ति चेत् तेऽपि अध्यात्मविषयेष्वन्तर्भवन्ति। व्याकरणन्तु केवलं पदसाधुत्वसाधकं भवति। अतो व्याकरणशास्त्रस्य कथङ्कारं दर्शनत्वं स्यादिति तेषामभिप्रायः। अत एव व्याकरणमपि दर्शनं भवतीति विषये किञ्चित् प्रागुच्यते।

यथा अन्यानि दर्शनानि सत्याऽसत्यविवेचने, आत्मतत्त्वप्रतिपादने निरतानि दृश्यन्ते, एवमेव व्याकरणमपि सत्यासत्यविवेकपुरःसरं शब्दब्रह्मणः प्रतिपादकं भवति। शब्दस्यैव प्रत्यगात्मरूपत्वेन व्यापकमपि अध्यात्मज्ञानोपायभूतं भवतीति दर्शनत्वं सिद्धत्येव।

यथा श्रुतयः जगत्कारणस्य- 'सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयम्।[1] आत्मैवेदं,[2] ब्रह्मैवेदं विश्वमिदं वरिष्ठम्[3] इत्यादिश्रुतिभिः जगत्कारणस्य सत्यत्वमेकत्वमात्मत्वं, ब्रह्मरूपत्वं वा प्रतिपादयन्ति, तथैव जगत्कारणस्य शब्दरूपत्वमपि निगदन्ति। तथाहि-

**वागेव विश्वा भुवनानि जज्ञे, वाच इत् सर्वमृतं यच्च मर्त्यम्।[4]**
**अथेदं वाग् बुभुजे वागुवाच, पुरुत्रा वाचो न पदं यच्च नाह॥**

---

१. बृहदा. २.४.५
२. छान्दोग्य. ७.२५.२
३. मुण्डक. २.२.११
४. वा. प.स्वो १.१८, १.२०

**वागेवार्थं पश्यति, वाग् ब्रवीति, वागेवार्थं निहितं संतनोति।**
**वाच्येव विश्वं बहुरूपं निबद्धम्, तदेकं प्रबिभज्योपभुङ्क्ते॥**

ओमित्येतदक्षरमिदं सर्व................. यच्चान्यत् त्रिकालातीतं तदप्योंकार एव।[१] 'ओमिति ब्रह्म...'[२] 'ओंकार एव सर्वा वाक्[३] इत्यादिभिः श्रुतिभिः वाचः शब्दस्य वा जगत्कारणत्वं सर्वोपादानत्वं वा सिद्धं भवति। तादृशशब्दब्रह्मणः वाग्ब्रहमणो वा प्रतिपादकं व्याकरणशास्त्रमिदं नूनं दर्शनं भवति। व्याकरणदर्शनं न केवलमाधुनिकोत्प्रेक्षितमपितु श्रुत्यनुमोदितं प्रशंसितञ्चापि भवति। तथाहि-

**दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।[४]**
**अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः॥**

प्रजापतिः=वैयाकरणः शब्दोपादानिकां सृष्टिं विदधानः संश्लिष्टे सत्यानृते पृथक्कृत्य, सत्ये परमार्थभूते वस्तुनि श्रद्धाम्, असत्ये=अनात्मनि अश्रद्धां कुर्यात्।

अन्येषामपि दर्शनानामयमेवोद्घोषः- एतत् सत्यं वस्तु, एतच्चासत्यम्-ब्रह्म सत्यं जगन्मिथ्या इति एवमेव व्याकरणमपि सत्यासत्यविचारकं भवति। इहापि शास्त्रे परमार्थतः परावागाख्यं शब्दब्रह्म एव सत्यम्। उपाधिभूतो व्यञ्जकः ध्वनिरूपः शब्दोऽनित्योऽसत्यः। पश्यन्त्यादिकमपि सर्वं जगदसत्यमेव। परावागेव उपदानभूतं ब्रह्मरूपं सत्यं भवति। एवमेव व्याकरणदर्शने-कल्पितौ प्रकृतिप्रत्ययौ असत्यौ। तदपेक्षया पदं सत्यम्, ततोऽपि वाक्यं सत्यम्, ततोऽपि च महावाक्यम् सर्वापेक्षया च पराख्यं वाग्ब्रह्म एव सत्यं भवति।

अयमभिप्रायः- वाग्विषये वैय्याकरणेष्वपि द्विविधं मतं प्रथितं विद्यते। केचन वाचः त्रैविध्यं प्राहुः, केचन च वाचः चातुर्विधत्वं स्वीकुर्वन्ति। तथाहि-

**वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।[५]**
**अनेकतीर्थभेदायाः त्रय्या वाचः परं पदम्॥ इति**

भर्तृहरिकारिकामनुसृत्य पश्यन्तीमध्यमावैखरीभेदभिन्नायाः वाचो त्रैविध्यमेति स्वीकुर्वन्ति केचन। अत एव वैखरीमध्यमयोर्मध्ये तिष्ठतीति मध्यमेत्युच्यते। अपरे पुनः-

**परावाङ्मूलचकस्था पश्यन्ती नाभिसंस्थिता।[६]**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति**

---

१. माण्डूक्य.मं १
२. तैत्तरीयो. १.८.१
३. ऐतरेयब्रा. ३.६.७
४. शु.य. १९.७
५. वा.प. १.१४३
६. प.ल.म.स्फो.

परमलघुमञ्जूषास्थरलोकमाधारीकृत्य-परापश्यन्तीमध्यमावैखरीभेदेन वाच: चातुर्विध्यमङ्गी-कुर्वन्ति। तदेवं वाचा भेदविषयिणी जिज्ञासा अवश्यमेव जागर्ति। अत: तद्भेदविषयेऽपि मनागालोच्यते।

अयं भाव: वाच: चतुर्विधत्वमन्यत्रापि शास्त्रे मिलति तथाहि-

**चत्वारि वाक्परिमिता: पदानि, तानि विदुर्ब्राह्मणा ये मनीषिण:।**[१]
**गुहा त्रीणि निहिता नेङ्यन्ति तुरीयं वाचो मनुष्या वदन्ति॥** इति

ऋग्वेदीयमन्त्रों महाभाष्ये आयाति। तत्र मूलव्याख्याने भाष्यकारो यद्यपि 'चत्वारि' इत्यनेन 'नामाख्यातोपसर्गनिपातश्च' इत्येवमर्थं करोति। तथापि तत्र "नामाख्यातोपसर्गनिपातश्च" इति द्वन्द्वान्ते उपात्तेन चकारेण श्रुत्यादिप्रसिद्धाया: परापश्यन्तीमध्यमावैखरीरूपाया: वाचोऽपि ग्रहणमवश्यमभ्युपेयम्। अतएव चत्वारि= परा पश्यन्ति मध्यमा वैखरी लक्षणानि इत्यपि सम्मानिताचार्यै: माधवाचार्यनागेशप्रभृतिभिरर्थ: स्वीकृत:। तानि परापश्यन्ती मध्यमा वैखरी लक्षणानि वचांसि ब्रह्मणा ये मनीषिण: व्याकरणतत्त्वज्ञास्ते विदन्ति। सामन्यमनुष्यास्तु वाचस्तुरीयं मार्गं वैखरीरूपमेव वदन्ति। मध्यमापश्यन्तीपाराख्यं यत् वाच: स्वरूपं तत्तु हृदयगुहायां बुद्धौ वा निहितं भवति इत्येवं मन्त्रस्यार्थ:। तदेवं भाष्यकारस्यापि वाच: चतुष्टयमप्यत्राभिप्रेतमिति ज्ञायते।

किञ्च 'वैखर्या मध्यमायाश्च' इत्यादिभर्तृहरिकारिकाया- अनेकतीर्थभेदाया: वैखर्या मध्यमाया: पश्यन्त्याश्च त्रय्या वाच: एतद् व्याकरणं परमुत्कृष्टमद्भुतं पदं स्थानं भवति। वाच: त्रयोऽवयवा एव व्याकरणशास्त्रस्य विषयभूता इति। अत्र प्रकृतिप्रत्ययविभागद्वारा तत्तदर्थविभागद्वारा वा व्याकरणशास्त्रमत्युपयोगीति भाव:। परायां वाचि तथा पदसंस्कारादिकं नैव भवति। अथवा "अनेकतीर्थभेदाया: वैखर्या मध्यमाया: पश्यन्त्याश्च त्रय्या वाच:, परं= श्रेष्ठं पदम्= मूलाधारस्थं पराख्यं वच: तदेतदद्भुतं= विलक्षणं भवति। योगिनामप्यगम्यम्। कदाचित्समाधौ निर्विकल्पकज्ञानगम्यं ब्रह्मरूपं भवतीति भाव:। किञ्च वाच: त्रित्वेऽपि पश्यन्ती वागेव द्विधा विभज्यते- अपरापश्यन्ती परापश्यन्ती, स्थूलापश्यन्ती सूक्ष्मापश्यन्ती वा। तत्र या स्थूलापश्यन्ती अपरापश्यन्ती वा सा प्रतिसंहतक्रमा बुद्धिमात्रग्राह्या सामान्यजनासंवेद्या भवति। या च परापश्यन्ती सूक्ष्मापश्यन्ती वा सैव परावाणीरूपेणोच्यते। तथा च भर्तृहरिमतेऽपि वाच: चत्वारो भेदा: सम्भवन्ति।

तत्र सर्वजनग्राह्या श्रोत्रग्राह्या वा वाग् वैखरी वागुच्यते। इयं वाणी कण्ठताल्वाद्यभिघातजन्या भवति। इयञ्च भ्रष्टसंस्कारा: प्राप्तसाधुत्वभावा च भवति। तदुक्तम्-

**स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा:।**[२]
**वैखरीवाक् प्रयोक्तृणां प्राणवृत्तिनिबन्धना॥**

---

१. उद्धृतं म.भा.प्र.आ.

२. वा.प.स्वो १.१४२

वैखरीशब्दविषये त्रीणि मतानि सन्ति। वायोः शब्दपरिणामः इति कश्चित्। अणूनां शब्दत्वापत्तिरित्यपरे। अन्ये च ज्ञानस्यैव शब्दपरिणाम इति।[१]

मध्यमा हृदयस्था भवति। अनया वाचा लोकव्यवहारः न भवति। मनोभूमावस्थानरूपा (मानसिक वाग्) बुद्धिमात्रोपादाना क्रमरूपानुपातिनी पश्यन्त्या वैखर्याश्च मध्ये भवतीति मध्यमा वाक्। केवलं बुद्ध्यैव गृह्यते, न तु श्रोत्रेण तदुक्तम्-

**केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी।[२]**
**प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥**

पश्यन्ती वाक् तु लोकव्यवहारातीता भवति। एषा वाग् अभिभागा—वाच्यवाचकविभागशून्या प्रतिसंहृतक्रमा सामान्यजनासंवेद्या भवति। योगिनां कृते तु पश्यन्त्यामपि वाच्यवाचकविभागादिकं प्रकृतिप्रत्ययविभागादिकं वा भवति। योगिनः स्वसमाधौ पश्यन्त्यामपि प्रकृतिप्रत्ययविभागं ज्ञातुं प्रभवन्ति। किन्तु पश्यन्त्यां वाचि केवलं यागिन एवार्थाऽनुभवं कुर्वन्ति। इयं च वाग् नाभिसंस्था भवति। शब्दतन्मात्राणि। मानसिकवृत्तितोऽपि पूर्वावस्थानमस्या बोध्यम्। तदुक्तम्-

**अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।[३]**

परावाक् तु ब्रह्मरूपा, निरवयवा, अगुणा, अतिसूक्ष्मा, स्वप्रकाशस्वभावा, प्रकाशस्यापि प्रकाशिका शब्दतन्मात्राणां कारणीभूता आत्मा एव वा भवति। इयं वागनपायिनी, अनादिनिधनस्वभावा भवति। तदुक्तम्-

**स्वरूपज्यातिरेवान्तः सूक्ष्मा वागनपायिनी॥[४]**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥[५]**

अयं भावः- 'यतो वो इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत् प्रत्यभिसंनिविशन्ति तद् विजिज्ञासस्व तद्ब्रह्म'[६] इति प्रसिद्धं ब्रह्मलक्षणं प्रायः सर्वैः दार्शनिकैः स्वीक्रियते। तथा च यत् समस्तप्रपञ्चस्य सर्गस्थितिध्वंशकारणं भवति तदेव ब्रह्म भवति। एतदुत्पत्तिस्थितिविनाशकारणरूपं लक्षणं पराख्ये शब्दे नितरां संघटते। तस्मात् पराख्यवाचः सर्वाणि भूतानि जायन्ते, तस्यैव महिम्ना जीवन्ति, अन्ते च तत्रैव लीयन्ते। अत एव वाचोऽपि ब्रह्मत्वेन प्रतिपादनं कृतं तैत्तिरीयोपनिषदि। तथाहि-भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीगहि भगवो ब्रह्मेति, स तस्मा एतत् प्रोवाच-'अन्नं श्रोत्रं मनः वाचम्' इति वागेवार्थमित्यादिभिरपि तथैव प्रतिपादितमस्ति। "शब्द इति चेन्नातः प्रभावात्

१. वा.प. १.१०८
२. वा.प.स्वो. १.१४२
३. वा.प.स्वो. १.१४२
४. वा.प.स्वो. १.१४२
५. वा.प. १.१२४
६. तैत्तिरीयो.१.३.१

प्रत्यक्षानुमानाभ्याम्"[1] इति ब्रह्मसूत्रेणापि शब्देभ्य एव जगदुत्पत्तिं स्वीकृत्य शब्दस्य ब्रह्मत्वं प्रतिपाद्यते। 'स भूरिति व्याहरत् भूमिमसृजत्, य भुवरिति व्याहरत्[2] सोन्तरिक्षमसृजत्'। मनुस्मतौ अपि नामकर्मसम्भवः वेदशब्दादेव उक्तोऽस्ति।

किञ्च श्रुतौ वाचः साक्षात्ब्रह्मरूपेण प्रतिपादनं भवति। तथाहि- "शैलिनीरब्रबीत् वाग् वै ब्रह्म"[3] 'वागधि ब्रह्म[4] वाग् वै सम्राट् परमं ज्योतिः' ते मृत्युमतिवर्तन्ते यो वै वाचमुपासते, वाग् ब्रह्म,[5] यत्र वै वाग् तद्ब्रह्म,[6] इत्यादिभिः श्रुतिभिः वाचः साक्षात्ब्रह्मरूपेण निरूपणं कृतं भवति। अतः आभिः श्रुतिरपि शब्दब्रह्मवादः समर्थितो भवति। एवञ्च वाग्ब्रह्मणः शब्दब्रह्मणो वा उपासकं व्याकरणशास्त्रमपि प्राचीनमेव दर्शनं भवति, न तु आधुनिकोत्प्रेक्षितमिति वेदितव्यम्।

व्याकरणस्य श्रुतिप्रतिपादितं दर्शनत्वमेव पश्चात् भर्तृहरिपादैः वाक्यपदीयग्रन्थे परिबृंहितम्, यस्य निदर्शनम्-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**[7]
**यत्तत्पुण्यतमं ज्योतिः तस्य मार्गोऽयमाञ्जसः।**[8]

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।।**[9]
**पवित्रं सर्वविधानामधिविद्यं प्रकाशते।**[10]

**इयं सा मोक्षमाणामजिह्मा राजपद्धति।**[11]
**तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते।।**[12]

इत्यादयः हरिकारिकाः भवन्ति। व्याकरणशास्त्रस्य दर्शनत्वादेव च एतत्सिद्धान्तस्स्फोटशब्दा-द्वैतप्रभृतयः दरीदृश्यन्ते। तेषां खण्डनं मण्डनं वा तत्र तत्र दार्शनिकाः कृतवन्तः।

अत्र इदं तावदवधेयं यत्- इदं व्याकरणम् आध्यात्मिकं लौकिकञ्चेत्युभयविधं महत्त्वं

---

१. ब्र.सू. १.३.२८
२. तैत्तीरीयो. २.२.४
३. वृ.उ. ४.१.२
४. ऐ.ब्रा. २.१५
५. गो.ब्रा. २.१०
६. ऐ.आ. १.५.२
७. वा.प. १.१.१
८. वा.प १.१.११
९. वा.प. १.१.११
१०. वा.प. १.१.१४
११. वा.प. १.१.१६
१२. वा.प. १.१.२२

स्वात्मनि बिभर्ति। अन्येषां दर्शानानां लौकिकं महत्वं लौकिकं फलं वा नास्त्येव। अस्य पुनः व्याकरणदर्शनस्य इहामुष्मिकोभयफलप्रसाधकत्वं भवति। अतश्चेदं शास्त्रं दार्शनिकपक्षं प्रक्रियापक्षञ्चेत्युभयथा जिज्ञासूनां कृते उपकारकं भवति। मन्दबुद्धीनां बालानां, प्रखरमतीनां पण्डितानाञ्चोपकारकं राजते। प्रक्रियापक्षस्य बृहणं काशिकाभाषावृत्तिसिद्धान्तकौमुद्यादिषु कृतं भवति। दार्शनिकपक्षस्य समुन्नति च वाक्यपदीय– वैयाकरणभूषणसार–वैयाकरणसिद्धान्तमञ्जूषादिग्रन्थेषु कृता भवति। महाभाष्यशब्दकौस्तुभादयस्तु व्याकरणशास्त्रस्याकरग्रन्थाः भवन्ति। यत्र सर्वेऽपि पक्षा विराजन्ते। तदुक्तम्– 'सर्ववेदपारीषदं हीदं शास्त्रं तत्र नैकेः पन्थाः शक्यम् आस्थातुम्।'[१]

महर्षिणा व्याडिना स्वप्रणीते लक्ष्यश्लोकात्मके संग्रहनामके ग्रन्थे चतुदर्शसहस्रणि वस्तूनि परीक्षितान्यासन्। ते पदार्थाः व्याडितत्पूर्वभाविदार्शनिकदृग्गोचराः भवेयुः। तदुक्तं महाभाष्यदीपिका–टीकायाम्–'चतुर्दशसहस्राणि वस्तूनि अस्मिन् संग्रहाख्ये......'[२] इति।

एवञ्च उपर्युक्तविवेचनेन व्याकरणस्य दर्शनत्वे नास्ति मनागपि संदेहः। न केवलमिदं शास्त्रं शब्दसाधुत्वप्रक्रियानिर्वाहकमात्रं किन्तु शब्दब्रह्मण उपासकमित्यायाति। एवञ्च एभिः प्रमाणैः नूनं शब्दब्रह्मवादः प्राचीनः सिद्धान्तः, प्राचीनञ्च व्याकरणदर्शनमिति सिद्ध्यति। तच्च ब्रह्म अन्ततः आन्तरस्फोटाख्यपरावागेव व्याकरणदर्शने स्वीक्रियते। एतदेव शब्दब्रह्म नित्यं सर्वव्यवहारजन्मस्थानं सर्वेषामन्तः स्थितम्, प्रसवोच्छेदशक्तियुक्तं सर्वशक्तिमत् शब्दवृषमाख्यं भवति। एतस्मादेवानादिनिधनात् शब्दब्रह्मणः, जगतः प्रक्रिया सम्भवति। शब्दब्रह्मप्राप्तिसाधनतयैव चैतच्छास्त्रे धात्वर्थनामार्थबौद्धार्थप्रभृतयः दार्शनिकपक्षा विवेचिताः सन्ति। सर्वमपि शब्दसाधुत्वप्रक्रियाप्रदर्शनमसत्यं सत्यप्राप्त्यर्थमेव तदुक्तं हरिपादैः–

**उपायाः शिक्षमाणानां बालानामुपलालना।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥**[३]

**तस्माद् यः शब्दसंस्कारः सा सिद्धि परमात्मः।**
**तस्य प्रवृत्तितत्वज्ञः स ब्रह्मामृतमश्नुते इति॥**[४]

तत्र जगतः शब्दमयत्वं शब्दपरिणामत्वनिबन्धमुतशब्दविवर्त्तत्वनिबन्धम्? जगतः शब्दविवर्त्तत्वनिबन्धमेवेति। तदुक्तम्–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[५]

१. म.भा. २.१.५८
२. म.भा.प. दीपि.टी.
३. वा.प. २.२३८
४. वा.प. १.१३२
५. वा.प. १.१.१

**श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।**
**स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते॥**[१]

सर्वं दरीदृश्यमानञ्जगत् तस्मादनादिनिधनाच्छब्दब्रह्मणोऽर्थभावेन विवर्तते= स्वरूपहानरहितं सन्नानारूपेण प्रतिभासते इति संक्षिप्तार्थः।

**तत्र को विवर्त्तपदार्थः कश्च परिणामशब्दवाच्यश्चेत् उच्यते-**

**अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरिता।**[२]
**सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीर्यते॥** इति

प्रसिद्धकारिकावतिष्ठते वेदान्तसारे। प्रकारान्तेरणाधिष्ठानविषमसत्ताककार्यापत्तिः। अधिष्ठान-समसत्ताककार्यापत्तिः परिणामः। उपादानविषमसत्ताककार्यापत्तिः विवर्तः। उपादानसमसत्ताककार्यापत्तिः परिणामः। कारणसत्तासमसत्ताकः परिणामः कारणसत्ताविसमसत्ताकः विवर्त इत्युक्तं यत्र तत्र शास्त्रकृद्भिः।

श्रीमद्भिर्वृषभदेवैर्विवर्तस्यैवं लक्षणं प्रत्यपादि-एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्य-रूपोपग्राहिता विवर्तः। स्वप्नविषयप्रतिभासवत्।[३] तत्त्वात् स्वरूपाद् अप्रच्युतस्य एकस्य शब्दब्रह्मणः आरोप्ये स्वभेदप्रतिभासपुरःसरं योऽसत्यस्याधिष्ठानविभागेन च प्रतीयमानस्य आरोप्यस्य धर्मोपग्रहः स विवर्तः।[४] स्वप्ने यथा एक विज्ञानात्मा विभिन्नपदार्थरूपेणावभासते, किन्तु विज्ञानात्मा न भिद्यते, तथा स्वीकारे उत्थितस्य पुरुषस्य स्मरणं न स्यात्, तद्वत् शब्दाख्यं ब्रह्माऽपि स्वरूपहानिरहितं सत् स्वकालाख्यशक्त्या नानारूपेण भासते।

यथा चैकस्य सूर्यस्य नानावापीकूपतडागादिषु प्रतिविम्बनं न नानात्वप्रयोजकं तथैकस्य नित्यस्य शब्दब्रह्मणो नानाकारेण विवर्तनमपि न नानात्वप्रयोजकम्। तद् ब्रह्म अनादिनिधनमेकं भवति। कार्यशब्दस्तु नाना, शाब्दिकैर्भेदसहिष्णोरभेदस्य स्वीकारात्। नित्यकार्यशब्दयोरौपाधिकभेदभिन्नत्वस्वीकाराच्च कार्यशब्दस्य नानात्वेऽपि न नित्यस्य नानात्वशङ्का। जगतः शब्दविवर्तत्वस्वीकारादेव घटादिपदार्थानां शब्दात्मकत्वस्वीकारेऽपि न नित्यत्वं तेषामतात्विकान्यथाभावस्वीकारात्। यद्यपि-

**शब्दस्य परिणामोऽयमित्याम्नायविदोविदुः।**[५]
**छन्दोभ्य एव प्रथममेतद्विश्वं विवर्तते॥ इति**

अत्र कारिकायां भर्तृहरिराचार्यः संसारोऽयं शब्दस्य परिणाम इति प्रत्यपादयद्। "अनादिनिधनम्" इत्यत्र तु विवर्तवादं समर्थितवान्, विवर्तपरिणामयोश्च भूयान् भेदो भवति, विरोधश्चेत्युक्तं पूर्वम्। अयं

१. वै. भू.सा
२. वै. भू.सा
३. वाप.स्वो. १.१
४. वा.प. अ.क.टीका १.१
५. वा.प. १.१२०

भावः– सत्ता त्रिधा भवति– पारमार्थिकी, व्यावहारिकी प्रातिभासिकी चेति। तत्र पारमार्थिकी – त्रिकालाबाध्यत्वरूपा सत्ता। सा च ब्रह्मणः। व्यावहारिकी सम्पूर्णस्य दरीदृश्यमानस्य जगतः, प्रातिभासिकी तु शुक्तौ रजतस्य। दुग्धस्य दधीभवनं परिणामः– दुग्धस्योपादानकारणस्य दधिरूपकार्यस्य चोभयस्य व्यावहारिकसत्तावत्त्वात् परिणामः। समसत्ताककार्यापत्तेः सत्त्वात्। शुक्तिकाया रजतीभवनं विवर्तः– उपादानशुक्तिकायाः व्यावहारिकसत्तावत्त्वात्, कार्यस्य=रजतस्य प्रातिभासिकसत्ता वेदान्तसारे प्रतिपादितम्– अतत्त्वतोऽन्यथेत्यादि। अतः वाक्यपदीये उभयविधनिरूपणाद् भवति संदेहो यत् कतरस्मिन् पक्षे हरीणां तात्पर्यमिति। यदि च–

**शब्दस्य परिणामोऽत्याम्नायविदो विदुः।**[1]
**छन्दोभ्य एव प्रथमं विश्वमेतद् व्यवर्तत॥**

इत्येकत्रैव श्लोके विवर्तपरिणामशब्दोपलम्भाद् विवर्तपरिणामयो हरिसमये सांकर्यमासीदिति गम्यते। अत एव शान्तिरक्षितातत्त्वसंग्रहे "अनादिनिधनम्" इति कारिकामर्थतोऽनुवदन् विवर्तपदमपहाय परिणामशब्दं प्रायुङ्क्त–

**नाशोत्पादसमालीढं शब्दब्रह्ममयञ्च यत्।**
**यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते॥**[2] **इति**

अपि च भगवान् शंकराचार्योपि विकारार्थे 'विवर्तते' इति पदं प्रयुंक्तवान्– यत्तत्सुखदुःख . ........ स्वभावेनैव विकारात्मना विवर्तते।[3] महाकविभवभूतिरपि तथैव परिणामार्थे विवर्तपदं प्रयुक्ङ्क्ते–

**एको रसः करुण एव निमित्तभेदात्, भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।**
**आवर्तबुदतरङ्गमयान् विकारान्, अम्भो यथा सलिलमेव हि तत्समग्रम्॥**[4]

जलस्यावर्तबुदबुदतरङ्गाणाञ्च व्यावहारिकसत्त्वेन उपादानसमसत्ताककार्यापत्तेः सत्त्वेन जलस्य परिणाम एव तत्सर्वम्। एवं प्रकारेण तत्र तत्र साङ्कर्यदर्शनेन कतरस्मिन् पक्षे वैयाकरणमूर्धन्यानां श्रीमतां हरिपादानां तात्पर्यमिति चेदत्रोच्यते – हेलाराजादिव्याख्यानेन शब्दब्रह्मविवर्तवाद एव भर्तृहरिपादानां तात्पर्यमित्यायाति। अत एव – 'अनादिनिधनम्'(वा.प.१.१) इति कारिकाव्याख्यानावसरे स्वोपज्ञवृत्तौ विवर्तलक्षणं लक्षितम्– एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्तः। स्वप्नविषयप्रतिभासवत् इति। 'शब्दस्य परिणामोऽयम्' इत्यत्र च परिणामलक्षणं न लक्षितम्।

अपि च 'शब्दस्य परिणामोऽयम् इत्याम्नायविदो विदुः' (वा.प.१.१२०) इति कारिकांशस्यायमर्थः– अयं सर्वोपि वाच्यवाचकभेदभिन्नः संसारः शब्दस्य सूक्ष्मवाक्तत्त्वस्य परिणाम इति आम्नायविदः=अन्ये

१. वा.प. १.१२०
२. त.सं. १२८
३. शां .भा. २.२.१
४. उ.रा. ३.४७

वेदविदो विदु: जानन्ति, न तु वयं विद्म:। अत: प्रथमं सर्गादावेतद्विश्वं छन्दोभ्य एव व्यवर्तत। अत्र च "छन्द:" पदेन सूक्ष्मं वाक्तत्त्वं परावागेव गृह्यते, नित्यशब्दत्वरूपच्छन्द:साधर्म्यात्। येषां मते वेदस्यानित्यता तत्र वेदस्य मन्त्ररूपस्य सूक्ष्मवाक्कार्यत्वेन कार्यकारणयोरभेदो बोध्य:।

किञ्च "विवर्ततेऽर्थभावेन"[१] इत्यारभ्य छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तते[२] इत्यन्तेन मध्ये अनेकशश्च 'शुद्धं ज्योति विवर्तते'[३] 'करणेभ्यो विवृत्तेन'[४] "तद्धर्मेण समाविष्टस्तेजसैव विवर्तते"[५] 'विवर्त्तमाना स्थानेषु सैषा भेदं प्रपद्यते'[६] इत्येवम् अभ्यासेन विवर्तशब्दोक्तेश्च विवर्तवाद एव हरीणां सम्मत: पक्ष:।

ननु विवर्तो नाम- 'तत्वतोन्यथा प्रथा' एवञ्च पर्यन्ते विवर्त्तस्य भ्रमरूपतास्थेया। पूर्व संस्कारं विना भ्रमो न सम्भवति। संस्कारश्च पूर्वानुभवजन्य:, अनुभवश्च विषयसत्तामपेक्षते। भयकम्पादिजनकत्वं प्रसिद्धमेव। अतो भ्रम: तदैव सम्भवति यदा तद्वस्तु कुत्रचित् सद्रूपेण स्यात्। सत एव कुत्रचिदसत्वेऽपि प्रतीतो भ्रमपदव्यपदेश्यत्वम् भवति। अत: दृश्यमानं जगच्चेद् भ्रम:, तदा तस्य कुत्र सत्ता यस्य भ्रमो लक्ष्यत इति कथं विवर्तसिद्धान्त: प्रसिद्ध्यति इति चेत्, पूर्वाऽनुभवे विषयसत्ताया अनियतत्वेन अन्यत्राऽसतोऽपि जगतो ब्रह्मणि भ्रम उपपद्यते। यथाकस्मिंश्चिदवृक्षेऽसतोऽपि प्रेतस्य कथञ्चिद्-ज्ञाने, तज्जन्यसंस्कारे च सति वृक्षोऽयं भूतावास इति भ्रम: प्रसिद्ध एव। ब्रह्मणि च जगद्भ्रमोऽनाद्यविद्याकृतो बोध्य:।

अपि च अर्थक्रियाकारित्वाज्जगद्विषयकं ज्ञानं न भ्रम:, अपितु अनुमानबलात् तस्य सत्यत्वं सिद्ध्यति तथाहि- उदकं सत्यम् (पिपासापरिसमनरूप) अर्थक्रियाकारित्वात्, यन्नार्थक्रियाकारि न तत् सत्यम्, यथा मरुमरीचिका जलम् इति। किन्तु अर्थक्रियाकारित्वसत्यत्वयोर्न व्याप्ति:। यतोहि असत्ये कूटकार्षापणेऽपि भ्रमावस्थायां व्यवहाररूपार्थक्रियाकारित्वं दृष्टमेव। यथा वा रज्जौ भासमाने भयकम्पादिजनकत्वं प्रसिद्धमेव।

तदेवं व्याकरणदर्शनेऽपि विवर्तवाद: स्वीक्रियते। किन्तु नायमद्वैतवेदान्तप्रक्रियास्वीकृतविवर्तेन सर्वथा समान:। यतो वाक्यपदीये तस्य शब्दब्रह्मण: स्वातन्त्र्यशक्ति: काल: स्वीक्रियते- अध्याहित-कलां यस्य कालशक्तिमुपाश्रित:[७] इति। कालेन अनुज्ञाता एव जन्मादयो विकारा जायन्ते। अन्या: सर्वा: शक्तय: कालपरतन्त्रा, नहि वर्षर्तो गोधूमोत्पत्ति: क्रियते कयापि शक्त्या। तथैव वसन्तेऽनुज्ञात एव कोकिल: 'कू कू' शब्दं करोति, न सर्वदा। वैयाकरणनये हि शक्तिशक्तिमतोश्चैक्यं स्वीक्रियते।

१. वा.प. १.१
२. वा.प. १.१२०
३. वा.प. १.१८
४. वा.प. १.४७
५. प.प. १.११४
६. वा.प. १.११७
७. वा.प. १.३

कालाख्यशक्तौ आरोपितभेदः न वास्तविकः। कालशक्तिविषये कालसमुद्देशे तृतीयकाण्डे वाक्यपदीये विशेषेणोक्तं हरिपादैः। एवञ्च ब्रह्मैव स्वशक्त्या स्वस्मिन् भेदमवभासयति।

किञ्चैवं प्रतीयते भर्तृहरिसमये व्युपसर्गपूर्वाद् वर्त्तमानाद्वृतुधातोः घञि निष्पन्नस्य विवर्तशब्दस्य विलक्षणतयाऽद्भुततया विशेषरूपेण विपरीततया वर्तनमिति विग्रहानुसारेण यौगिकार्थो गृह्यते। तदुक्तं हेलाराजेन अनेकभावग्रामरूपतया चाद्भुततया वृत्त्या विवर्तनात्[१] इति। न च परिणतिदर्शनाभिप्रायोऽयं विकारशब्दः अनित्यत्वप्रसङ्गाद् ब्रह्मणः। अपि तु विवर्तपर्यायोऽयम् इति "सर्वे भावविकारेषु" इत्यादि कारिकां टीकामानो हेलाराजः।

स च विवर्तो द्विविधः क्रियामूर्तिभेदात्। तत्र गेहे घटः, क्षेत्रे गौः इत्यादिना देशभेदावग्रहरूपेण यद् गोपटादिरूपाणाम् अर्थानामवस्थानं स मूर्तिरूपो विवर्तः। यत्तु तेषामेव जायते नश्यति वा घट इत्यादिना उत्पादविनाशादिक्रियोपहितरूपेणावस्थानं स क्रियारूपो विवर्तः। (अ. क. टीका) स च द्विविधोऽपि विवर्तोऽविद्याशक्तिरूपतया प्रवृत्तिरूपतयो चावस्थाभेदभिन्नः संश्चातुर्विध्यं भजते।

अथ कया रीत्या शब्दब्रह्मणः संसारोऽयं विवर्तत इति जिज्ञासायामुच्यते – सृष्ट्यादावनादिनिधनं सर्वग्राह्यग्राहकाकारवर्जितं परावाग्रूपं (सूक्ष्मपश्यन्तीवाग्रूपं वा) शब्दब्रह्म सृज्यमानप्रपञ्चवैचित्र्यहेतु-प्राणिकर्मसहकृतमपरिमि शक्तिसहितं सज्ज्ञानरूपात्मकं सकलं प्रपञ्चं प्रथमं बुद्धावाकलय्य विराजते। तदा सङ्कल्पयति "एकोऽहं बहुस्यां प्रजायेय"[२] इति। तदनन्तरं स्वकीयया कालख्यया कालशक्त्या स्वातन्त्र्यशक्या सहितोऽपञ्चीकृतानि भूतानि क्रमेणाकाशादीनि तन्मात्रवाच्यान्युत्पादयति। ततश्च नामरूपात्मकं जगदिति।

तदेवं व्याकरणमपि दर्शनं यत्र च शब्दब्रह्मवादः विवर्तवादश्च राजते। शब्दब्रह्म एव सर्वेषां पदार्थानां कारणम्। न किमपि तादृशं ज्ञानं वस्तु वा यत्र शब्दानुवेधो न भासते। नामरूपात्मकोऽयं संसारः शब्दब्रह्मण एव विवर्तः। पर्यन्ते तु शब्दब्रह्मैव शिष्यते। तदुक्तम्– वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। अन्ते च–

**ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धम्।**
**विवृत्तं शब्दमात्राभ्यः तास्वेव प्रविलीयते॥ इति शम् ॥**

किञ्च "आत्मा वा अरे द्रष्टव्यः" इत्यादि श्रुत्या आत्मसाक्षात्कारस्यैव मोक्षहेतुता आयाति।

---

१. वा.प.स्वो ३.२.२
२. छा.उ. ६.२.३

# वास्तोश्शास्त्रीयरूपम्

**प्रो. देवीप्रसादत्रिपाठी**

वास्तुशब्दस्याभिप्रायः निवासायोपयुक्तं स्थानम्भवति। अयं शब्दः "वस्" निवासे धातुना सह "तुण" प्रत्ययेन निष्पन्नो भवति। यत्र निवासो भवति तदेव वास्तु। अस्यानेकाः भेदाः भवन्ति। यथा–गृहम्, देवालयः, ग्रामः पुरादयश्च। भारतीयचिन्तनपरम्परायां वेदा एव सर्वेषां शास्त्राणामादिस्रोतांसि सन्ति। वेदाः चत्वारः सर्वविदिताः। शिक्षा–कल्प–व्याकरण–निरुक्त–छन्द–ज्योतिषानि वेदाङ्गान्यपि सर्वविदितान्यैव। चतुर्णां वेदानामपि चत्वार उपवेदा सन्ति। यथा–ऋग्वेदस्य आयुर्वेदः यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेद अथर्ववेदस्य च स्थापत्यवेदः। स्थापत्यवेदस्याभिप्रायोऽपि निवासयोग्या स्थापना एव। ऋग्वेदस्यैकस्मिन् प्रसङ्गे वास्तोस्पतेः प्रार्थनायामेकार्चा मिलति। यथा–

**वास्तोष्पते प्रति जानीह्यस्यान्त्स्वावेशो अनमीवो भवा नः।**
**यत् त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे॥**

हे वास्तोष्पदे! अस्मान् प्रति जानीहि। नः स्वावेशः अनमीवः भवः। यत् त्वा ईमहे तत् नः प्रति जुषस्व। न द्विपदे चतुष्पदे शं भवः।

हिन्दूसंस्कृतौ देवपूजायाः विधानमस्ति। अत्र प्रतिवस्तुनि पिण्डे वा देवत्वस्य परिकल्पनैव हिन्दूसंस्कृतेरेकोदात्तभावनाऽस्ति। अस्यां संस्कृतौ साकारनिराकारौ द्वौ पूजाविधानौ स्तः। वैदिकसाहित्यानुसारं वास्तोष्पतिः साक्षात् परमात्मनः नामान्तरमेवास्ति यतो हि त एव विश्वब्रह्माण्डरूपीनः वास्तुनोऽधिपतयः सन्ति। आगमपुराणानामनुसारं वास्तुपुरुष एक आधारभूतोपदेवताऽस्ति। येषामुपर्येव ब्रह्मा–इन्द्रादयः लोकपालसहिताः पञ्चचत्वारिशंद्देवाः प्रतिष्ठिताः सन्ति। ते देवाः वास्तुनः कल्याणमिच्छन्ति। पुराणेषु वास्तुपुरुषस्य प्रादुर्भावस्यैका कथा मिलतीति सर्वे जान्त्यैव।

अन्धकासुरस्य वधस्य समये भगवतः शंकरस्य तृतीयनेत्राद्भूमौ एकः स्वेदबिन्दुरपतत्। तस्माद् बिन्दोरेकः विशालाकृतिवान् पुरुषः प्रकटितोऽभवत्। तेनान्धकासुरस्य रक्तपानङ्कृतम्परन्तु सः तृप्तोः नाभवत्। तदा सर्वैर्देवैतङ्गृहित्वाधोमुखम्भूमौ विनिश्य वास्तुपुरुषस्य रूपे तस्य प्रतिष्ठा कृता। यथोक्तम्–

**संग्रामेऽन्धरुद्रयोश्च पतितः स्वेदो महेशात् क्षितौ,**
**तस्माद्भूतमभूच्च भीतिजननं द्यावा पृथिव्योर्महत्।**

**तद्देवैः सहसा निगृह्य निहितं भूमावधो वक्त्रकं**
**देवानां वचनाच्च वास्तुपुरुषस्तेनैव पूज्यो बुधैः॥**[१]

अत्र विचारणीयोऽस्ति यत् कोऽस्ति शिवः। शिवः विश्वकल्याणपरकदेवोऽस्ति। येषान्तृतीयनेत्रात् स्वेदबिन्दुः भूमावपतत्। अस्याभिप्रायोऽस्ति यत् नेत्रात् स्वेदरूप ऊर्जा निसृता, भूमौ पतनान्तरमूर्जा प्रकाशरूपे परिणिताऽभूत्। प्रकाशकिरणैरन्धकारस्य नाशोऽभवत्। अन्धकार एवात्रान्धकासुरोऽस्ति। यथा-यथा प्रकाशकिरणाः प्रसरन्ति तथा-तथाऽन्धकारः दूरम्प्रति गच्छति। अयमासीत् सृष्टेरारमभकालः। उत्तरोत्तरं वृद्धिकारणात् प्रकाशरूपे स्थिता ऊर्जा विशालविकरालरूपन्धारयित्वा विश्वं भक्षणायोद्यता अभवत्। अस्यानन्तरन्देवा (प्रकाशरुपपिण्डानि) तामूर्जां स्थिरीकृत्य सृष्टिरूपे परिणिताऽभवत्।

ज्यौतिषशास्त्रस्य संहिताविभागे वास्तुशास्त्रस्य वर्णनं मिलति। ज्योतिषशास्त्रस्य विचारणीयपक्षाणां दिग्देशकालानां कारणैरेव वास्तुशास्त्रस्य समावेशः ज्योतिषशास्त्रेऽभवत्। मानवीयजीवनस्य विविधपक्षाणां वैदिककालादेव सूक्ष्मातिसूक्ष्मविचारः ज्यौतिश्शास्त्रङ्करोतीति। अस्मिन् शास्त्र एव मानवस्य जीवनस्य विविधपक्षाणां सम्मक् विचारार्थं सर्वाधिकः प्रयासो भवति।

ज्योतिषशास्त्रं कालविधानशास्त्रमस्ति। कालस्यानन्तरन्दिशः ज्ञानम्भवति। दिक्कालौ पिण्डसापेक्षौ देशसापेक्षौ वा भवतः। कालस्य महत्वं प्रदर्श्य स्ववास्तुशास्त्रे विश्वकर्मणा निगदितं यत्-

**आदौ कालं परीक्षेत सर्वकार्यार्थसिद्धये।**
**कालो हि सर्वजीवानां शुभाशुभफलप्रदः॥**

**कालातिक्रमणे दोषो द्रव्यहानिश्च जायते।**
**देवानामपि देवीनां विप्रादीनां विशेषतः॥**

**प्रसादभवनारम्भे स्तम्भस्थापनकर्मणि।**
**द्वारस्थापनवेलायां भवनानां प्रवेशने॥**

**वापीतटाकनिर्माणे गोपुरारम्भकर्मणि।**
**विमानमण्डपारामगर्भगेहोद्धतो तथा॥**

**कालं शुभं परीक्षेत मङ्गला वाप्ति साधकम्।**
**देशभेदेन कालोऽपि भिन्नतां प्रतिपद्यते॥**

**तस्मात्सर्वप्रयत्नेन शुभं कालं न लङ्घयेत्॥**[२]

कालानुरूपं वास्तुशास्त्रे दिङ्निर्धारणमपि महत्वपूर्णमस्ति। विना दिङ्निर्धारणे कुलनाशोऽपि भवितुं शक्यते। प्रसङ्गेऽस्मिन् कथयति वृद्धनारदः-

**प्रसादे सदनेऽलिन्दे द्वारे कुण्डे विशेषतः।**
**दिङ्मूढ़े कुलनाशः स्यात् तस्यात् संसाधयेद्दिशः॥**

१. वास्तुरत्नावली पृ. ४५
२. विश्वकर्मावास्तुशासाम् 3:1-6

**प्रथमं सुसमे क्षेत्रे प्राचीं संसाधयेत् स्फुटम्।**
**सिद्धान्तोक्तप्रकारेण ततो निष्पादसेद् गृहम्।।**[१]

पुरुषार्थचतुष्टयसिद्धये गृहस्थस्यार्थमेकस्य शुभवास्तोरावश्यता भवति। यथा भविष्यपुराणे वर्णनमिलति। यत्-

**गृहस्थस्य क्रियाः सर्वा न सिद्धयन्ति गृहं विना।**
**यतस्तस्माद् गृहारम्भकर्म चात्राभिधीयते।।**[२]

गृहस्थस्य सर्वा:क्रिया:स्वगृह एव सिद्धयन्ति न तु परगृहे। अत्र प्रसङ्ेगऽस्मिन्नैकमौचित्यपूर्ण वर्णनम्मिलति। यथा-

**परगेहे कृताः सर्वा श्रोतस्मार्तक्रियाः शुभाः।**
**न सिद्धयन्ति यतस्तस्मात् भूमीशः फलमश्नुते।।**[३]

वैदिकसंहितासु वास्तुशास्त्रस्य प्रचुरसामग्रयुपलभ्यते। यथा-धार्मिककर्मकाण्डे यज्ञवेदीनां निर्माणम् इष्टिकानान्नामानि, जनोपयोगीवास्तुषु तेषां प्रकार: प्रयोगश्च प्रासादराजप्रासाद-जनगृहादीनां निर्माणस्य विस्तृता चर्चा पशूनामुपयोगाय सदनानां प्रयोगश्च । तत्र वर्णनं मिलति यत् वैदिकार्या: कृषका: पशुपालनार्थं पशूनामनुकूलतायायरण्यानाम्मध्ये स्थितेषु ग्रामेषु निवसन्ति स्म। ऋग्वेदे ग्रामशब्दस्य प्रयोगोऽपि बहुषु स्थलेषु मिलति। यथा-पाषाणै: निर्मितदुर्गाणां वर्णनं "अश्मयी" लोहनिर्मितदुर्गाणाञ्च वर्णनं "आयसीपु:" नामना मिलति। ब्राह्मणग्रन्थेषु वर्णितं पुरी पुरम् पु: इत्यादय:शब्दा: तत्कालीनवास्तोरुन्नतस्थिते: सूचका: सन्ति। ऋग्वैदिकसंहिताया अध्ययनेन ज्ञानं भवति यदृग्वैदिकार्याणां जीवनं सुखमयं संतुष्टञ्चासीत्। तत्रैकस्मिन् स्थाने सहस्रस्थाणुभि: निर्मितभवनस्योल्लेख: मिलति यत्र नृपो निवसति स्म। गृहसूत्रेषूल्लिखिते गृहप्रवेशे वास्तोष्पते: पूजनेन ज्ञानं भवति यदयं गृहरक्षकदेवोऽस्ति। अस्य देवस्य प्रार्थनायां निरोगताधनपशुसम्पतीनां प्रार्थनाया इतर योगक्षेमयोरपि याचना अस्ति। यथा-**पाही श्रेमे उत्त योगे वरं न:।** ऋग्वेदे[४] गृहस्य त्रिंशत् नामानि मिलन्ति। यथा- गृहम्, गय:, पस्त्यम्, दुरोणम्, दुर्य:, दम (दम्), ओक:, योनि:, धामन्, निवेशनम्, वसति, छर्दिस, सदनम्, सदस्, सदम्, हर्म्यम्, विदथम्, गुहा, ऊस्तम्, क्षय:, अया, स्वसराणि अज्म छाया च। निघण्टौ गृहस्य द्वाविंशति पर्याया: मिलन्ति। यथा[५]- गय:, कृदर:, गर्त:, हर्म्यम् अस्तम्, पस्त्यम्, दुरोणे, नीलम्, दुर्या, स्वसराणि अपा: दये, कृत्ति:, योनि:, सदम्, शरणम्, वरुथम् छर्दि, छदि: छाया शर्म अज्म च। अथर्ववेदेऽपि वास्तुरचनाया उल्लेखो मिलति।[६] तत्र वंशादिभि: विनिर्मितानां स्तम्भानां वर्णनं पर्णकुटिनिर्माणे विस्तृतभवननिर्माणे च मिलति। तत्र भवनाङ्रुपे गोष्ठीशाला, भण्डारशाला, आन्तरिकशाला, यज्ञशाला, अतिथिशालादीनां वर्णनमपि मिलति।

१. वृहद्वावास्तुमाला पृ. ४२
२. भविष्यपुराणमुद्धृतम् वास्तुसारसंग्रह: प्राक्कथनम् पृ. २
३. तत्रैव
४. ऋग्वेद 2:3:8, 1:154:6, 8:10:5, 6:16:33, 1:121:2, 4:53:6
५. निघण्टु 3:4, निरुक्त 3:13:09
६. अथर्ववेद 3:12, 9:03

प्रायः वैदिकवैदिकोत्तरसाहित्येषु वासुशास्त्रस्य वर्णनं विभिन्नप्रसङ्गेषु दरीदृश्यते। पुराणेष्वपि वास्तुशास्त्रस्य वर्णनं बहुषु स्थलेषु विस्तृतरुपेण मिलति। प्रायः मत्स्य-वराह-ब्रह्मवैवर्त-स्कन्द-अग्नि-देवीभागवत्-गरुड़-श्रीमद्भागवत-कल्कि-भविष्योत्त-विष्णुधर्मोत्तरपुराणेषु वास्तुशास्त्रस्य चर्चा उपलभ्यते। एतेष्वपि मत्स्य-स्कन्द-गरुड़ अग्नि-भविष्यपुराणेषु अस्य शास्त्रस्य मूलसिद्धान्तानां नियमानाञ्च विस्तृतं वर्णनम्मिलति।

सहस्रवर्षेभ्योऽस्माकमाचार्या अस्य शास्त्रस्य विकासाय प्रयत्नशीला आसन् सन्ति च। मत्स्यपुराणानुसारं भृगु-अत्रि-वशिष्ट-विश्वकर्मा-मय-नारद-नग्नजित-विशालाक्ष-पुरन्दर-नन्दीश-शौनक-गर्ग-वासुदेव-अग्निरुद्ध-शुक्र-बृहस्पति-अश्विनीकुमारैः वास्तुशास्त्रस्य विस्तृता व्याख्या कृता। मत्स्यपुराणानुसारं वास्तुशास्त्रस्य एतेऽष्टादशप्रवर्तकाः सन्ति[१] परन्तु अग्निपुराणे[२] वास्तुशास्त्रस्य प्रवर्तकानां संख्या पञ्चविंशति तथा च मानसारे[३] त्रिशत् वर्तते। एतेषु बहवो वैदिकऋषयः सन्ति।

भारतीयवास्तुशास्त्रस्य परम्परायां द्वौ प्रख्यातौ आचार्यौ स्तः विश्वकर्मामयश्चेति। विश्वकर्मा देवानां मयश्चासुराणां शिल्पी आसीत्। महाभारते स्थपतेः मयस्य शिल्पकौशलं दृश्यते। तत्र तैः पाण्डवानाङ्कृत एतादृशं सभाभवनं विनिर्मितं यत्र जलाशयः स्थलरुपे स्थलं च जलाशयरूपे दृष्टिगोचरं भवति स्म। ब्राह्मणग्रन्थेषु नागानां वर्णनं मिलति। नागा अत्यन्तकुशलिनः शिल्पिनः आसन्। नग्नजितः तेषान्नृप आसीत्। नग्नजितैः विरचितं चित्रलक्षणं भारतीयचित्रकलायाः प्राचिनतमो ग्रन्थोऽस्ति। अनेन स्थापत्यस्य वास्तुशास्त्रस्य वा प्राचीनता सिद्धयति। स्थापत्यं नामोपवेदः कालान्तरे वास्तुशास्त्रं शिल्पशास्त्रं वेति नाम्ना प्रथितः बभूव। यथा प्रसङ्गेऽस्मिन् प्रशंसां कुर्वन् स्ववास्तुशास्त्रे विश्वकर्मणा कथितं यत्-

**यत्प्रसादान्मया ज्ञातं वास्तुशास्त्रमिदं ततम्।।**
**शास्त्रेणानेन सर्वस्य लोकस्य परमं सुखम्**
**चर्तुवर्गफलप्राप्तिस्सल्लोकश्च भवेद् ध्रुवम्।।**
**शिल्पशास्त्रपरिज्ञानान्मर्त्योऽपि सुरतां व्रजेत्।**
**परमानन्दजनकं देवानामिदमीरितम्।।**
**शिल्पं विना नहि जगत्त्रिषु लोकेषु विद्यते।**
**जगद्बिना न शिल्पञ्च वर्तते वासव प्रभो।।**
**अतो लोकेषु सर्वेषु शिल्पं बहुविधं ततम्।**
**ग्रामाणाञ्च पुरीणाञ्च लक्षणं बहुधा स्मृतम्।।**[४]

१. भृगुरत्रिर्वशिष्ठश्च विश्वकर्मा मयस्त तथा।
नारदो नग्नजिच्चैव विशालाक्ष पुरन्तदः।।
ब्रह्मा कुमारो नन्दीश शौनको गर्ग एव च।
वासुदेवो अनिरुद्धश्च तथा शुक्रवृहस्पती।।
अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः।
सक्षेपेनोपदिष्टं यन्मनवे मत्स्यरूपिना।। मत्स्यपुराणम् 252.2-4

२. अग्निपुराणम् 39.1-5

३. मानसारः 68:1-9

४. विश्वकर्मा वास्तुशास्त्रम् 2/29-33

विशेषरुपेण विष्णुपुराणे हरिवंशपुराणे बौद्धानां लालितविस्तरे जैनानामुत्तराध्यानसूत्रे कल्पसूत्रे दशकुमारचरिते कादम्बर्याम् क्षेमेन्द्रस्य कलाविलासे समवायसूत्रे विदर्भराजस्य रामचन्द कृतटीकायाम्च शिल्पानां सुदीर्घा नामावली दृश्यते। अस्माकं संस्कृतसाहित्ये कलाविषयकाणि त्रीणि शास्त्राणि सन्ति, वास्तुशास्त्रम् शिल्पशास्त्रं चित्रशास्त्रञ्च। प्रायः वास्तुशास्त्रस्याचार्याः शिल्पशास्त्रं वास्तुशास्त्रस्य पर्यायरूपेण स्वीकुर्वन्ति परन्तु केचन आचार्याः वास्तुशास्त्रं शिल्पशास्त्रान्तर्गतं मन्यन्ते। दशमवैक्रमशताब्ध्यां लिखिताम्भूपतेः धाराधिपस्य भोजराजस्य समराङ्गणसूत्रधारनाम्नीं कृतिमवलोक्य ज्ञानं भवति यत् शिल्पचित्रशास्त्रे वास्तुशास्त्रान्तर्गतमेव विभाव्येते। एतेनैव वास्तुशास्त्रस्य व्यापकं क्षेत्रं संगच्छते। प्रायः वास्तुशास्त्रं गृहनिर्माणविषयकं शास्त्रमस्ति परमत्र गृहनिर्माणेषु देवालयनिर्माणमप्यागच्छन्ति। देवालय (प्रासाद) निर्माणन्तु प्रतिमानिर्माणसदृशम्भवति प्रासादेषु च प्रतिमानिर्माणमप्येकं मूर्धन्यं कार्यमस्ति। अतः प्रतिमानिर्माणमेवात्र शिल्पशास्त्रमस्ति। प्रासादेषु गृहेषु च चित्रालेखनमपि भवति। अतः शिल्पं चित्रं च वास्तुशास्त्रान्तर्गमेवाचार्याः स्वीकुर्वन्ति। अनेन समराङ्गणसूत्रधारकारेण प्राधान्येन वास्तुशास्त्रस्य त्रयो विभागाः स्वीकृताः। प्रथमं वास्तु, यत्र भवननिर्माणं भवति। भवनेषु जनभवनं राजभवनं देवभवनञ्चागच्छन्ति। द्वितीयं शिल्पं यत्र प्रतिमानिर्माणं भवति तथा च तृतीयं चित्रमालेख्यमिति। प्राप्तेषु वास्तुशिल्पशास्त्रग्रन्थेषु समराङ्गणसूत्रधारः शिल्परत्नञ्च सम्पूर्णौ वास्तुग्रन्थौ स्तः। अत्र भवनानां प्रतिमाणां चित्राणाञ्च प्रतिपादनं वर्तते। अनयोः ग्रन्थयोः पुर-दुर्ग-भवन-प्रासाद-प्रतिमा- चित्र- यन्त्र- शयनासनानां स्थापत्यस्याष्टाङ्गानां सर्वेषां वर्णनं विद्यते वास्तुशास्त्रमेवास्माकं भारतीयस्थापत्यस्य अविकलां परम्परां पुष्णाति। समराङ्गणसूत्रधारस्य समकालिका कृतिरवराजितपृच्छाऽप्येतद् समर्थनं करोति परन्तु मानसारे भवनानां (विमानानां) प्रतिमानाञ्च वर्णनं मयानुसारं वर्तते।

अस्माकमियं सृष्टिः पञ्चभूतात्मिकाऽस्ति। यथा मानवस्य शरीरं पञ्चमहाभूतानां समिश्रणमस्ति तथैव भूमौ कृतकार्यमपि पञ्चतत्त्वेषु आधारितं भवति। पृथिव्यां सूर्यकिरणानां प्रभावः पृथिव्याः चुम्बकीयक्षेत्रम् वायूनां दिशा तेषाम्प्रभावाद्यनेकाः तथ्या एतादृशाः सन्ति येषां वास्तुशास्त्रदृष्ट्या विचार आवश्यकोऽस्ति। प्रातःकालिकसूर्यकिरणानां प्रभाव मानवस्य कृते सर्वाधिकमनुकूलम्भवति। चुम्बकीयक्षेत्रस्य परिज्ञानं कृत्वैव आचार्याः शयनकाल उत्तरस्यां दिशि शीर्षम् न कर्त्तव्यमिति निर्दिशन्ति यतो ह्यनेन चुम्बकीयक्षेत्रस्य सर्वाधिकप्रभावोऽस्माकं शरीरे पतति। वस्तुतः वास्तुपुरुषः पृथिव्याः चुम्बकीयशक्तेः विभिन्नबलधाराणाञ्च जागृतं रुपमस्ति। अस्य शरीरस्य संतुलने ग्रहाणां नक्षत्राणां वायूनां जलतापादिप्राकृतिकशक्तीनां महत्वपूर्णा भूमिकाऽस्ति। अयं वास्तुपुरुषः चेतनायाः रूपमस्ति। अस्यानुभूतिः भावनया भवति न तु बुद्धया। पृथिव्याञ्चेतनामाचार्यैश्चैतन्यवास्तुरुपे दृष्टम् तदैव भवननगराणां रचना तैः कृता। समग्रपृथिव्यां वास्तुपुरुषस्यैकं रूपन्तथा च व्यष्टिगतवास्तोः वास्तुपुरुषस्य एकमन्यद् रुपम्भवति। अनेन वृहद-लघु वास्तुरूपाणां वर्णनेन द्योतितं भवति यत् यथास्माकं सम्पूर्णं शरीरमेकः सजीव-एककोऽस्ति परन्तु अस्य निर्माणे यासां सूक्ष्मकोशिकानां योगदानमस्ति ता अपि सजीव-एककरूप एव भवन्ति। एताषां कोशिकानां प्रतिक्रिया एव समग्रशरीरस्य प्रतिक्रिया भवति। अस्यैकात्मभावस्य वास्तोः प्राधान्यं निर्माणकार्ये दृश्यते। सर्वेषां ग्रहनक्षत्रादीनामूर्जाप्रभावेन वास्तुरचनानुकूला प्रतिकूला च भवति। अनेन वास्तुशास्त्रे समग्रबलधाराणामूर्जाप्रभावक्षेत्राणाञ्च पूजनं देवानां विभिनेषु रूपेषु भवति।

वास्तुशास्त्रस्य केचन मूलभूतसिद्धान्ताः सन्ति। येषां प्रयोगः वास्तुनिर्माणे सर्वत्रावश्यकम्भवति। विनैतेषां प्रयोगेण महती हानिरपि भवितुं शक्यते। ते मूलभूतसिद्धान्ताः सन्ति–

१ वास्तुपदविन्यासः।

२ दिक्साधनम्।

३ मानविचारः।

४ आयादिविचारः

५ पताकादिविचारः

**१. वास्तुपदविन्यासः–**

वास्तुपदविन्यासमेव वास्तुशास्त्रे वास्तुपुरुषमण्डलं भवति वास्तोर्निर्माणात् पूर्वं या प्राक् कल्पना भवति सा एव वास्तुयोजना। वास्तुयोजना एव वास्तुपदविन्यासम्। स्थापत्येऽस्य स्थानं सर्वप्रथमं भवति यतो हि भवननिर्माणस्य क्रियान्विति इत एव प्रारभ्यते। प्राचीनभारतीयपरम्परायां वास्तुपुरुषस्याधारपरिकल्पना वैदिकी दार्शनिकी चास्ति। अत एव वास्तुपुरुषस्य परिकल्पनायां कलादर्शनयोः समन्वयः दृष्टिगोचरो भवति। कलात्मकदृष्ट्या वास्तुपदविन्यासमेकमात्रं भवनयोजनाऽस्ति। दार्शनिकदृष्ट्या वास्तुपदविन्यासमावासीयभवने गृहनिवासीनां जीवनदर्शनं वर्तते। सामान्यतया वास्तुपदविन्यासस्य प्रक्रियायां भवननिर्माणात् पूर्वं निर्धारितक्षेत्रे वास्तुपुरुषस्य स्थापना कृत्वैव निर्माणकार्यम्भवति। निर्माणकार्ये चतुष्षष्ठि–एकाशीति– शतपदादिमण्डलानां वास्तुपदरूपे विन्यास एव वास्तुपदविन्यासोऽस्ति। अस्यां प्रक्रियायां पूर्वापर– याम्योत्तरलम्बरूपा अष्ट–अष्ट, नव–नव, दश–दश, एकादश–एकादशादिरेखाभिः एकोनपञ्चाशत्, चतुषष्टि, एकाशीति शत कोष्ठकानामेकं वर्गाकारं क्षेत्रं विनिर्मितम्भवति। यस्मिन् वर्गाकारक्षेत्रे यानि कोष्ठकानि भवन्ति तेषां संज्ञा तथैव भवति। यथा एकोनपञ्चाशतपदवास्तुः चतुष्षष्टिपदवास्तुः एकाशीतिपदवास्तुः शतपदवास्त्वादयः। येषु सर्वेषु पदेषु पञ्चचत्वारिंशद्देवानां विन्यासो भवति। ईशाने वास्तुपुरुषस्य शीर्षस्तदैव नैऋत्ये पादौ भवतः। पदविन्यासेऽपि वर्गाकार–आयताकारादिक्षेत्रेष्वधोमुखमानवाकृतेः रचना भवति। अयं वास्तुपुरुषः स एवास्ति यः सृष्टयादिप्रक्रियायामादौ आसीत् तं गृहीत्वाधोमुखं कृत्वा देवैस्तस्य प्रतिष्ठा वास्तुपुरुषरूपे कृता। नगर–ग्राम–राजप्रासादादि–धार्मिककार्येषु चतुष्षष्टिपदवास्तो आवासीयगृहेषु एकाशीतिपदवास्तोः कूपतडागवनोद्यानजलाशयादिनिर्माणेषु षण्णवत्यधिकशतपदवास्तोः स्थापना भवति। यथा राजबल्लभे–

**ग्रामे भूपतिमन्दिरे च नगरे पूज्यश्चतुष्षष्टिकै–**
**रेकाशीतिपदैः समस्तभवने जीर्णे नवाब्ध्यंशकैः।**
**प्रासादे तु शतांशकैस्तु सकले पुज्यस्तथा मण्डपे**
**कूपे षण्णवचन्द्रभागसहिते वापी तडागे वने॥**[1]

वर्गाकारकोष्ठकेष्वपेक्षितवास्तुचक्रस्य स्थापना कृत्वा वास्तुपुरुषमण्डलान्तर्गतस्थितदेवानां पूजनं भवति। पूजनं विना कष्टान्याागच्छन्ति। यथा–

१. राजबल्लभमण्डनम् २/०४

**निर्माणे मन्दिराणाञ्च प्रवेशे त्रिविधेऽपि वा।**
**वास्तुपूजा तु कर्त्तव्या यस्मात्ता कथयाम्यतः।।**

**एवं यः कुरुते सम्यग्वास्तुपूजां प्रयत्नतः।**
**आरोग्यं पुत्रपौत्रादि धनधान्यं लभेन्नरः।।**

**वास्तुपूजामकृत्वा यः प्रविशेन्नवमन्दिरे।**
**रोगान्नानाविधान्क्लेशानश्नुते सर्वसङ्कटम्।।**[१]

**यः पूजयेद्वास्तुमनन्यभक्त्या न तस्य दुःखं भवतीहि किञ्चित्।**
**जीवत्यसौ वर्षशतं सुखेन स्वर्गे नरस्तिष्ठति कल्पमेकम्।।**[२]

**वास्तुपूजाविहीनश्च सूत्रधारैर्विना तथा।**
**सप्तजन्म भवेत्कुष्ठी सकर्त्ता नरकं ब्रजेत्।।**[३]

### २. दिक्साधनम्-

निर्माणकार्यार्थं सर्वप्रथमन्दिङ्निर्धारणमावश्यकभवति। विना दिङ्निर्धारणेन सम्यक् निर्माणकार्यं न भवितुं शक्यते। सर्वप्रथमं भूमिं समतलं कृत्वा मध्ये शंकुं स्थापयेत् तदा शंकुछायया दिङ्निर्धारणं कर्त्तव्यम्। प्रातःकाले शंकोः छाया पश्चिमा साङ्काले च पूर्वा भवति। प्रसङ्गेऽस्मिन् प्रायः सर्वैराचार्यैः निगदितं दिङ्निर्धारणम्। यथा गणेशदैवज्ञेन लिखितम्-

**वृत्ते समभूगते तु केन्द्रस्थितशंकोः क्रमशो विशलपैति।**
**छायाग्रमिहाऽपरा च पूर्वा ताभ्यां सिद्धतिमेरुदिक् च याम्या।।**[४]

विषयेऽस्मिन विश्वकर्मणा निगदितं यत्-

**प्राचीं परीक्षेत्सम्यक्सूर्यगत्यनुमानतः।**
**गृहीतस्थलके शंकुमवटे स्थापयेत्क्रमात्।।**[५]

दिङ्निर्धारणार्थं सर्वाधिकोपयुक्तः समयोऽस्ति मध्याह्नकालः। मध्याह्ने शंकोःछाया सदा याम्योत्तरा भवति। क्रान्त्य- अक्षांशयोः भेदात् छाया उत्तरा याम्या च भवति। यदि क्रान्त्याक्षांशाः समाः भवन्ति तदा तद्देशे वा छाया शून्या भवति। यद्युत्तरगोलेऽक्षाशतः क्रान्तिः न्यूना स्यात् तर्हि छाया उत्तरा परन्तु यद्यक्षाशतः क्रन्तिरधिका स्यात्तर्हि छाया दक्षिणगा भवति। दक्षिणक्रान्तौ सौम्यगोले छाया उत्तरा सौम्य-क्रान्तौ दक्षिणगोले छाया सदा दक्षिणगा भवतीति। यथा-

**दिनमानदले सप्ताङ्गुलच्छायाग्रतो हि यत्।**
**शंकुमूले नीयमानं सूत्रं स्यादुत्तरा दिशा।।**[६]

---

१. महुर्त्तचिन्तामणि १३/३ पीयूषधारा
२. राजबल्लभमण्डनम् २/३८
३. तत्रैव २/३७
४. ग्रहलाघवम् ४/२१
५. विश्वकर्मावास्तुशास्त्रम् ३/७
६. बृहद्वास्तुमाला दिग्ज्ञानसाधनम् श्लो. ७

अधुना कम्पासयन्त्रेण दिङ्ज्ञानं भवति परन्त्वनेनापि दिङ्मूढ़ता भवितुं शक्यते। मध्याह्ने दिङ्निर्धारणं यदि स्यात् तर्हि समीचीनं दिग्ज्ञानं भवति।

**३. मानविचार:-**

वास्तुविन्यासे हस्तमापनपक्रिया मौलिकासीत्। वास्तुपदेषु निवेश्यभवनादीनां भवनेषु च प्रकोष्ठादीनां मानं (प्रमाणं) किं स्यादित्यस्यां प्रक्रियायां प्राचीनकालादेव हस्ताङ्गुलिप्रमाणानि प्रचलितानि सन्ति। सम्प्रति नगरेष्वियं प्रक्रिया प्रवर्तिता भवति। निर्माणात् पूर्व मापनमानदण्डस्य सम्यक् निर्धारणं यदि न स्यात्तर्हि प्राक्कल्पनानुरूपं भवनपुरादीनां निवेश: न भवितुं शक्नोति। अत: सर्वप्रथमं मापनमानदण्डस्य निर्धारणं करणीयम्। अस्माकं परिकल्पनायां वास्तुपदविन्यासं नितान्तमव्यक्तमस्ति। व्यक्तरुपे परिणिताय मापनमेका आवश्यकप्रक्रिया अस्ति। दार्शनिकदृष्टया कथितुं शक्यते यत् यथा निराकारब्रह्म मायाशक्तेरभावेन सगुणेश्वरस्य रूपं न भवितुं शक्नोति तथैवाव्यक्तवास्तुमपि मापनप्रक्रियया विना व्यक्तरुपे परिवर्तितं न भवितुं शक्यते। यथा माया दृश्यवत: जगत: मूलशक्तिरस्ति तथैव मापनप्रक्रियाऽपि कस्यचिद् वास्तुन: मूलाधार प्रतीयते। मापनप्रक्रियां विना कस्यापि वास्तो: पूर्णता न भवितुं शक्नोति। यथा मयेनोक्तम्-**मानं धामनस्तु सम्पूर्ण जगत सम्पूर्णता भवेत्।**[1] समराङ्गणसूत्रधारानुसारम्मापनप्रक्रिया: निश्चितमानदण्डानां परिमाणेनैव मन्दिरेषु स्थापितादेवा: पूजनार्हा: भवन्ति। यथा-**प्रमाणे स्थापिता देवा: पूजार्हाश्च भवन्ति ते।**[2]

**४. आयादिविचार:-**

वास्तुशास्त्रदृष्टयाऽऽयादिसाधनप्रक्रिया महत्वपूर्णा अस्ति। आयादिसाधनमपि मानप्रक्रियाया: मूलाधाारे षडङ्गमाननाम्नाऽन्तर्हितमस्ति। तानि षडङ्गमानानि सन्ति १. आय:, २. व्यय: ३. अंश: ४. ऋक्ष: ५. योगि: ६. वार: तिथिश्च। मुहूर्त्तचिन्तामणौ[3] आयादिषड्वर्गाणां स्थाने आयादिनववर्गाणां परिकल्पना आचार्यै: प्रस्तुता कृता। मुख्यरूपेणायस्यावश्यकता द्वारस्थापनार्थ भवति। गृहस्य विस्तारेण दैर्घ्यमानं हतं कृत्वा अष्टभिर्विभज्य शेषमेव ध्वाजादिराया:।

यथा-

**विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्तत:।**
**यच्छेषं स: भवेदायो ध्वजाद्यास्तेस्युरष्टधा।।**
**ध्वजो धूम्रो हरिश्वा गौ: खरेभौ वायसोऽष्टम:**
**पूर्वादिदिक्षु चाष्टानां ध्वजादीनामवस्थिति:।।**[4]

एषां फलानि-

**कीर्ति: शोको जयो वैरं धनं निर्धनता सुखम्।**
**रोगश्चेति गृहारम्भे ध्वजादीनां फलं क्रमात्।।**[5]

१. मयमतम्
२. समराङ्गणसूत्रधार : ३४/२१
३. मुहूर्तचिन्तामणि : १२/११-१२
४. वृहद्वास्तुमाला आयाद्यानयनम् श्लो. ३-४
१. तत्रैव श्लो. ५

अन्योऽपि-

**ध्वजे बहुधनं प्रोक्तं धूम्रे चैव भ्रमं भवेत्।**
**सिंहे च विरला लक्ष्मीः श्वाने च कलहं भवेत्॥**
**धनं धान्यं वृषे चैव खरेषु स्त्रीविनाशनम्।**
**गजाये पुत्रलाभश्य ध्वांक्षे सर्वत्र शून्यता॥**[१]

ध्वजाये चतुर्दिक्षु, सिंहाये पूर्वोत्तरदक्षिणदिक्षु गजाये पूर्वदक्षिणदिशोः गौ आये पूर्वदिशि द्वारं स्थापनीयम्। आयसाधनार्थ पिण्डज्ञानमावश्यकम्भवति पिण्डसाधनार्थ च नक्षत्रायोरावश्यकता भवति। गृहस्यकृते आर्द्रा, पुनर्वसुः, पुष्यः, आश्लेषा, मघा, पू. फा., शतभिषा, पू. भा., उ. भा. शुभनक्षत्राणि सन्ति। येषु नक्षत्रेषु तस्य नक्षत्रस्य चयनं करणीयं यस्य नाडी गृहपतेश्च नक्षत्रस्य नाडी एका एव स्यात् परन्तु गृहपतेः गृहस्य च नक्षत्रमेकं कदाऽपि न भवेत्। उभयोर्नक्षत्रैक्यम्मृत्युप्रदम्भवति। यथोक्तम्-

**सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि।**
**परस्परं मित्रयोश्च एका नाडी प्रशस्यते॥**[२]

### ५. पताकादिविचारः-

प्राचीनानामाचार्माणान्धारणासीत् यत् कमपि निवेशं दृष्टवैवं ज्ञानम्भवेद्यदस्मिन्निवेशे वास्तौ वा किङ्कार्यम्भवति। प्राचीनवास्तुशास्त्राचार्यैः "इत्थमभूतलक्षणे" इति मतं स्वीकृत्य कथमन्ति यत् कस्याऽपि पिण्डस्य वास्तोः वा बाह्यरुपं दृष्ट्वैव तस्य मूलरूपस्याभिज्ञा भवति तथैव कस्यापि भवनस्य दर्शनेन तस्य ज्ञानं भवितव्य यदयं शिक्षालयोऽस्ति, अयं शिवालयोऽस्ति इत्यादयः। एतादृशं ज्ञानमेव पताकादिविचारो भवति।

### वास्तुनिवेशः-

वास्तुशास्त्रस्य महत्वपूर्णाङ्गोऽस्ति निवेशः। समराङ्गणसूत्रधारानुसारं न्निवेशात् पूर्ण वास्तुशास्त्रस्य समग्रमूलभूतसिद्धान्तानाम्पालनमावश्यकं वर्तते। निवेशान्तर्गतं मुख्यकार्य भवननिवेश एव। पुरस्यान्तर्गतं जनभवनानां राजभवनानाञ्च विन्यासः कुत्र स्यादिति विचारः प्रमुखरुपेण भवति। जनभवननिवेशे वास्तुशास्त्रस्य भवननिवेशप्रक्रियाया अनुपालनं सामान्यरुपेण भवति परन्तु राजदेवभवनयोः विशिष्टप्रक्रियाया अनुपालनं दृश्यते। भारतीयस्थापत्ये भवननिवेशोऽष्टभागेषु विभक्तो वर्तते। यथा-१. भूमिचयनम्। २. विधा (भवनानां प्रकारः) ३. प्रतिकृतिः ४. विनियोजनम् ५. द्रव्यम् चयविधिश्च ६. भवनाङ्म् ७. सज्जा ८. दोषाश्च।

### १. भूमिचयनम्-

विन्यासात् पूर्ण निवेशार्थं भूमेः चयनं सर्वप्रथमम्भवति। भूमिचयनेऽनेकाः विधयः सन्ति। पञ्चमहाभूतानान्तन्मात्राभिः भूमेः परिक्षणम्भवति। आकाशवायुतेजजलपृथिवीनान्तन्मात्रा क्रमशः शब्दस्पर्श-रुप-रस-गन्धाः सन्ति। पञ्चज्ञानेन्द्रियेभ्य एतेषान्तन्मात्राणां ज्ञानम्भवति। अतः ज्ञानेन्द्रियैः

१. वास्तुसारसंग्रह ८/२२-२३
२. मुहूर्तचिन्तामणिः १२/१२ पी. टी.

भूमेः परिक्षणं सर्वप्रथमतया भवति। वर्णपरत्वे भूमिलक्षणानि अत्र सन्ति। वर्णः चक्षुरिन्द्रियस्य विषयोऽस्ति। यथा–

**शुभस्य शुभदा ज्ञेया दशा पापस्य चाधमा।**
**शुक्ला मृत्स्ना च या भूमिब्राह्मणी सा प्रकीर्तिता॥**
**क्षत्रिया रक्तमृत्स्ना च हरिद्वैश्या उदाहृता।**
**कृष्णा भूमिर्भवेच्छूद्रा चतुर्धा परिकीर्तिता॥**[1]

पुनश्च वर्णपरत्वे भूमिलक्षणानि–

**श्वेता शस्ता द्विजेन्द्राणां रक्ताभूमिर्महीभूजाम्।**
**विशां पीता च शूद्राणां कृष्णान्येषां विमिश्रिता॥**[2]

स्पर्शपरत्वे भूमिलक्षणाानि/स्पर्शत्वकिन्द्रियस्य विषयोऽस्ति। यथा–

**ब्राह्मणी भूः कुशोपेता क्षत्रिया स्याच्छराकुला।**
**कुशकाशाकुला वैश्या शुद्रा सर्वतृणा कुला॥**[3]

गन्धपरत्वे भूमिलक्षणानि। गन्धः जिघ्राणेद्रियस्य विषयोऽस्ति। यथा–

**सुगन्धा ब्राह्मणीभूमि रक्तगन्धा तु क्षत्रिया।**
**मधुगन्धा भवेद्वैश्या मद्यगन्धा च शूद्रिका॥**[4]

रसपरत्वे भूमिलक्षणानि। रसः जिह्वेन्द्रियस्य विषयोऽस्ति। यथा–

**अम्ला भूमिर्भवेद्वेश्या तिक्ता शूद्रा प्रकीर्तिता।**
**मधुरा ब्राह्मणी भूमिः कषाया क्षत्रिया मता॥**[5]

अष्टदिक्प्लवत्वफलम्। अयं विषयः चक्षुरिन्द्रियस्य वर्तते। यथा–

**शम्भुकोणे प्लवा भूमिः कर्त्तुः श्रीसुखदायिनी।**
**पूर्वप्लवा वृद्धिकरी धनदा तूत्तरप्लवा॥**
**मृत्युशोकप्रदा नित्यमाग्नेयी दक्षिणप्लवा।**
**गृहक्षयकरी सा च भूमिर्यानिर्ऋतिप्लवा॥**
**धनहानिकरी चैव कीर्तिदा वरुणप्लवा।**
**वायुप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी॥**[6]

---

१. वृहद्वास्तुमाला दिग्ज्ञानम् श्लो. २७–२८
२. तत्रैव श्लो. ३३
३. तत्रैव श्लो. २९
४. तत्रैव श्लो. ३०
५. तत्रैव श्लो. ३१
६. तत्रैव श्लो. ३७–३९

आकारत्वेन भूमेः लक्षणम्। चक्षुरिन्द्रियविषयोऽयम्। यथा-

**आयते सिद्धयस्सर्वाश्चतुरस्रे धनागमः।**
**वृत्ते तु बुद्धिवृद्धिः स्याद्भद्रं भद्रासने भवेत्।।**
**चक्रे दारिद्र्यमित्याहुर्विषमे शोकलक्षणम्।**
**राजभीतिस्त्रिकोणे स्याच्छकटे तु धनक्षयः।।**
**दण्डे पशुभयं प्राहुः शूर्पे वासे गवां क्षयः।**
**कुम्भे तु बन्धनं पीडा धनुक्षेत्रे भयं महत्।।**
**कुम्भाकारे कुष्ठरोगो भवत्येव न संशयः।**
**पवने नश्यन्ति नेत्रं च मुरजे बन्धुविनाशनम्।।**[1]

अनेन बहुभिः प्रकारैः भूमेः परीक्षणं भवति। भूमेः परिक्षणं कृत्वैव नरः निवासं कुर्यात्।

**२. विधा (भवनानां प्रकारः)-**

भवननिर्माणप्रकारेषु तिस्रः विधाः सन्ति। प्रथमं सामान्यजनानां कृते भवनम्, द्वितीयं राजकीयजनानां कृते भवनम्, तृतीयं देवभवनं मन्दिरं वेति। येष्वत्र सामान्यजनभवनस्य प्रकोष्ठवर्णनं प्राचीनैराचायैरेवं कृत्तम्।[2] तच्चैव-

वसिष्ठश्च-

**ऐन्द्रयां दिशि स्नानगृहमाग्नेय्यां पचनालयम्।**
**याम्यायां शयनं वेश्म नैर्ऋत्यां शस्त्रमन्दिरम्।।**
**पश्चिमायां भोजनगृहं वायव्यां धान्यसंग्रहम्।**
**उदीच्यां हाटकं सद्म ऐशान्यां देवमन्दिरम्।।**

नारदस्तु-

**भाण्डागारं तूत्तरस्यां वायव्यां पशुमन्दिरम्।।**

वृद्धवसिष्ठश्च-

**ऐन्द्राग्न्योर्मथनं मध्ये याम्याग्न्योर्घृतमन्दिरम्।**
**यमराक्षसयोर्मध्ये पुरीषत्यागमन्दिरम्।।**
**राक्षसो जलयोर्मध्ये विद्याभ्यासस्य मन्दिरम्।**
**तोयेशानिलयोर्मध्ये रोदनस्य गृहं भवेत्।।**
**कामोपभोगशयनं वायव्योत्तरयोर्गृहम्।**
**कौबेरैशानयोमध्ये चिकित्सामन्दिरं सदा।।**
**महेन्द्रेशानयोर्मध्ये सर्ववस्तुषु सङ्ग्रहः।**
**सदनं कारयेदेवं क्रमादुक्तानि षोडश।।**

---

१. वास्तुसारसंग्रहः ३/१४-१७
२. वास्तुसारसंग्रहः २५/२-७

मुहूर्त्तचिन्तामणौ दिगनुरोधेनापि एवमेव वर्णनं मिलति। यथा–

**स्नानाग्निपाकशयनास्त्रभुजश्च धान्यभाण्डारदैवतगृहाणि च पूर्वतः स्युः।**
**तन्मध्यतस्तु मथनाज्यपुरीष-विद्याभ्यासाख्यरोदनरतौषधसर्वधाम॥**[1]

वायव्यः उ. ईशानः

| | | | | |
|---|---|---|---|---|
| अन्नम् (भण्डारम्) | रतिगृहम् | भण्डार कक्षः | औषधि कक्षः | पूजागृहम् |
| कोपभवनम् (रोदनगृहम्) | | | | सर्ववस्तु |
| भोजनम् | | | | स्नानमन्दिरम् |
| अध्ययनम् | | | | दधिमन्थनम् |
| शस्त्रागारम् | पुरीषत्यागम् | शयनम् | आज्यम् | पाकसदनम् |

पू. पू.

नैर्ऋत्यम् द. अग्निः

## ३. प्रतिकृतिः–

शालाभिः भवनानां मुख्यतः चतस्रः प्रतिकृतयः भवन्ति। एक-द्वि-त्रि- चतुश्शालानां परस्परविन्यासैः षट्शालतः दशशालभवनानां वर्णनं प्राचीनग्रन्थेषु मिलति। अनेनासंख्यानि गृहाणि भवन्ति। प्रत्येकस्मिन् शाले कियन्मितानि भवनानि विर्निमितानि भवन्तीति वर्णनं समराङ्गणसूत्रधारे मिलति। यथा- एकशाले १०८ (शतमष्टाधिकम्), द्वि-शाले ५२ (द्वापञ्चाशत्), त्रिशाले ७२ (द्विसप्तति) चतुश्शाले २५६ (षट्पञ्चाशताधिकं शतद्वयम्), पञ्चशाले १०२५ (पञ्चविंशत्यधिकदशशतम्), षट्शाले ४०९६ (षण्णवत्यधिकं पञ्चषष्टिसहस्रम्), सप्तशाले ६५५०० (पञ्चशताधिकं पञ्चषष्टिसहस्रम्), अष्टशाले २६२६२०० (शतद्वयाधिकं षट्विंशति, सहस्राणि षट्विंशति लक्षञ्च), नवशाले १०४८०४४ (चतुश्चत्वारिंशदधिक, मष्टचत्वारिंशसहस्राणि दशलक्षञ्च), दशशाले ५७६ (षट्सप्तत्यधिकपञ्चशतम्) मितानि भवनानि।

---

१. मुहूर्त्तचिन्तामणि श्लो. १२/२१

**यथोक्तम् समराङ्गणसूत्रधारे[१]-**

**वेश्मनामेकं शालानां शतमष्टाधिकं स्मृतम्।**
**द्वापञ्चाशत् द्विशालानां त्रिशालानां द्विसप्तति॥**

**चतुश्शालानि वेश्मानि यानि तेषां शतद्वयम्।**
**पञ्चाशच्चाधिका षड्भिर्विज्ञातव्या मनीषिभिः॥**

**सहस्रपञ्चशालानां स्यात् तथा पञ्चविंशति।**
**षट्शालानां षण्णवति स्यात् तथा सहस्रचतुष्टयम्॥**

**वेश्यानि सप्तशालानि भवनानि परिसंख्यया।**
**पञ्चषष्टिसहस्राणि तथा पञ्चशतानि च॥**

**गृहाणामष्टशालानां षट्त्रिंशदपरा भवेत्।**
**लक्षद्वयं सहस्राणि द्विषष्टिः शतमेव च॥**

**गृहाणां नवशालानां चत्वांरिंशत् चतुर्युता।**
**दशलक्षसहस्राणि चत्वारिंशत् तथाष्ट च॥**

**शतानि दशशालानां पञ्चषट्सप्ततिस्तथा॥**

**४. विनियोजनम्-**

भवनविनियोजनं सम्प्रति "विल्डिङ्गबाईलाज" इति नामना जनाः जानन्ति। कदा भवननिर्माणं स्यात्? तत्र कति द्वाराणि भवेयुः? कस्यां दिशि द्वाराणि स्युः? निवासभवने कति तलानि भवेयुः? गवाक्षाः कुत्र कुत्र स्युः? इत्यादयः विचारणीयाः विषयः विनियोजने भवन्ति।

**५. द्रव्यं चयविधिश्च-**

भवननिर्माणे द्रव्यस्य कदा कत्यावश्यकता भविष्यतीति विचारं कृत्वा भित्तीनां चयविधीनां विचारोऽप्यत्रैव भवति।

**६. भवनाङ्गम्-**

अलिन्द- पीठ-द्वार-स्तम्भ- कुड्य (भिती: भितिलेपनं वा) आछाद्यादीनां निर्णयोप्यस्मिनैव भवति।

---

१. समराङ्गणसूत्रधार: १९/२/१०

**७. सज्जा-**

प्रकृतिचित्रणादिभिःगृहसज्जा द्वारसज्जादीनां विचारोऽत्र भवति।

**८. भवनदोषाः-**

अत्र भवनदोषानां वर्णनं विशद्रुपेण प्राप्यते। भवनदोषानां बहवः श्रेणयः सन्ति। प्रायः दोषज्ञानाय आचार्याः कथयन्ति यत् वास्तुशास्त्रस्य मूलप्रमाणानां विचारः सम्यक् करणीयम्। समराङ्णसूत्रधारे गृहदोषप्रकरणं पृथक् रुपेणास्ति। तत्र बहवः दोषाः आचार्यैः कथिताः।

# न्यायमाश्रित्य कारकस्वरूपविमर्शः

–डॉ. हरेराम त्रिपाठी

व्याकरणशास्त्रे ये प्रत्ययाः भवन्ति। तेषां विभागः चतुर्विधः प्रतिपादितो जगदीशेन–

**विभक्तिश्चैव धात्वंशस्तद्धितं कृदिति क्रमात्।**
**चतुर्धा प्रत्ययः प्रोक्तः, कादिभिः पञ्चधाऽथवा।।**[१]

तत्र संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः सा विभक्तिरिति सा च सुप्तिङ् चेति भेदाद् द्विविधा भवति। विभक्तेस्स्वरूपं प्रतिपादयन्नाह जगदीशभट्टाचार्यः–

**प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने।**
**समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते।।**[२]

यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः सा सुबादिविभक्तिरित्युच्यते। यद्वा प्रत्ययार्थधर्मिकप्रकृत्यर्थविधेयकान्वयबोधसमर्थः शब्दो विभक्तिरिति। तत्र सुपः किमिति जिज्ञासायामुच्यते–

**प्रकृत्यर्थे स्वार्थसङ्ख्यान्वयधीहेतवः सुपः।**
**प्रथमादिप्रभेदेन ताश्च सप्तविधा मताः।।**[३]

प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते। ताश्च प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी चेति भेदात् सप्तविधा भवन्ति।

तत्र धात्वर्थावच्छिन्न तिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तन्त्रं तादृशी सुबेषु प्रथमा।[४] अत्र कृष्णकान्तविद्यावागीशेनोच्यते यादृशानुपूर्व्यवच्छिन्ननामोपस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्न तिङर्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वमिति।[५] द्वितीयादीनां विभक्तीनां संक्षेपेण स्वरूपं निरूपयन्नाह जगदीशः–

१. शब्दशक्तिप्रकाशिका कारिका ।।६०।। पृ.सं. २८३
२. तदेव ।।६२।। पृ.सं. २८४, २८५
३. तदेव ।।६३।। पृ.सं. २८६
४. शब्दशक्तिप्रकाशिका पृ.सं. २८८
५. कृष्णकान्तीटीका पृ.सं. २८८

**धातुभेदानुपादाय तदर्थे कर्मतादिकान्।**
**बोधयन्त्यो द्वितीयाद्या निर्वक्तव्या विभक्तयः।।**[१]

तिबन्तपचधातूपस्थाप्यपाकधर्मिककर्मत्वानुभवानुकूलसुप्सजातीयत्वं द्वितीयाविभक्तेर्लक्षणमिति। अर्थात् यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तपचधातूपस्थाप्यार्थधर्मिककर्मत्वप्रकारकान्वय-बोधजनकतावच्छेदकं तादृशानुपूर्वीमत्त्वे सति विभक्तित्वं द्वितीयेति।[२] पच्यर्थधर्मिककरणत्वान्वय-बोधानुकूलसुप्सजातीयत्वं तृतीयात्वम्।[३] यद्वा यादृशधर्मावच्छिन्नप्रकारकनिश्चयत्वं पच्यर्थधर्मिक-करणत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशधर्मवत्त्वं तृतीयाविभक्तेर्लक्षणम्। ददात्यर्थदानधर्मिक-सम्प्रदानत्वानुभावकसुप्सजातीयत्वं चतुर्थीत्वम्।[४] अर्थात् दाधातुविशेषोपस्थाप्यदानधर्मिकसम्प्रदानत्व-प्रकारकान्वयबोधजनकतावच्छेदकं यादृशधर्मावच्छिन्ननिश्चयत्वं तादृशधर्मवद्विभक्तित्वमिति चतुर्थीविभक्ते-र्लक्षणमिति।

अत्र गोकुलनाथोपाध्यायैरुच्यते–

**डे.भ्याम्भ्यश्चतुर्थी सा सम्प्रदानत्ववाचिका।**
**सम्प्रदानन्तु दानस्य क्रियाया वा फलोपयुक्।।**[५]

पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकविभागबोधानुकूलसुप्सजातीयत्वं पञ्चमीत्वमिति।[६] कृष्णभट्टास्तु यादृशानुपूर्वीप्रकारकनिश्चयत्वं पतनत्वावच्छिन्नधर्मिकविभागप्रकारकान्वयबोध-जनकतावच्छेदकविभक्तित्वे सति तादृशानुपूर्वीमच्छब्दत्वं पञ्चमीत्वमिति। तिबन्तदा धात्वर्थधर्मिक-स्वार्थान्वयबोधस्वरूपायोग्यत्वे सति प्रथमान्यसुप्त्वं षष्ठीत्वमिति। यद्वा यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तादिधात्वर्थधर्मिकस्वार्थप्रकारकान्वयबोधजनकतावच्छेदकं प्रथमान्यत्वे सति तादृशानुपूर्वीमत्सुप्त्वं षष्ठीविभक्तेर्लक्षणम्।[७] यद्वा हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वानुभावकसुप्सजातीयत्वं षष्ठीत्वम्। सम्बन्धसामान्ये स्वत्वे वा शक्ता सुप् षष्ठी। जगदीशभट्टाचार्येण सप्तमीविभक्तेर्लक्षणद्वयमुक्तम्–

१. पचधात्वर्थतावच्छेदकरूपावच्छिन्न[८] धर्मिक स्वार्थाधेयत्ववोधानुकूलसुप्सजातीयत्वं सप्तमीत्वम्। अर्थात् यादृशानुपूर्वीप्रकारकनिश्चयत्वं रूपादिपरावृत्तिफलजनकतेजःसंयोगावच्छिन्नक्रियात्वावच्छिन्न-

---

१. शब्दशक्तिप्रकाशिका कारिका ।।६६।।
२. कृष्णकान्तीटीका पृ.सं. २८९
३. शब्दशक्तिप्रकाशिका पृ.सं. २८९
४. शब्दशक्तिप्रकाशिका पृ.सं. २९०
५. पदवाक्यरत्नाकरः गूढार्थदीपिकासहितः पृ.सं. ५८०
६. शब्दशक्तिप्रकाशिका पृ.सं. २९१
७. शब्दशक्तिप्रकाशिका पृ.सं. २९२
८. शब्दशक्तिप्रकाशिका पृ.सं. २९२

विशेष्यकस्वार्थाधेयत्वप्रकारकान्वयबोधजनकतावच्छेदकं सुप्त्वे सति तादृशानुपूर्वीमत्त्वं सप्तमीत्वम्।[१]
२. अधिकरणतायामाधेयत्वे वा शक्ता सुप् सप्तमी। चैत्रधर्मिकस्वार्थाधिकरणत्वान्वयबोध-कसुप्समानानुपूर्वीकत्वं वा सप्तमीत्वमित्यपि केचिद् वदन्ति।

सुपो विभागो द्विविधोऽपि भवति। शक्त्या कारकस्य बोधिका तदन्यस्य च बोधिका सुपिति। अत एव जगदीशभट्टाचार्य आह–

**कारकार्थेतरार्था च सुप् द्विधा च विभज्यते।**
**धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्॥**[२]

यद्धातूपस्थाप्य यादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः स तद्धातूपस्थाप्य तादृशक्रियायां कारकमिति जगदीशभट्टाचार्यः। षष्ठ्यर्थस्तु सम्बन्धो न धात्वर्थे प्रकारीभूय भासते अतः सम्बन्धो न कारकमिति। अत एव–

**क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम्।**
**कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते॥**

क्रियानिमित्तत्वं कारकत्वमिति केचित्। तन्न चैत्रस्य तण्डुलं पचति इत्यत्र सम्बन्धिनि चैत्रादौ अतिव्याप्तेः, अनुमतिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वात्, किन्तु क्रियान्वितविभक्त्यर्थान्वितत्वं कारकत्वमिति। अस्ति च कर्तृकर्मादेः क्रियान्विततिङ्सुब्विभक्त्यर्थान्वयः न तूदाहृते सम्बन्धिनि। षष्ठ्यर्थसम्बन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वादिति जयरामभट्टाचार्यः। यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थे कारकतया व्यपदिश्यत इत्यपि जगदीशभट्टाचार्याः वदन्तीति।

भवानन्दविरचिते कारकचक्रे कारकस्य लक्षणत्रयमुपलभ्यते।

१. क्रियानिमित्तत्वं कारकत्वम्।

२. विभक्त्योर्थ द्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम्

३. कर्तृत्वकर्मत्वादिषट्कान्यतमद्वाराक्रियान्वयित्वं कारकत्वमिति। तत्र यः क्रियानिमित्तत्वं कारकत्वमिति लक्षणं नैयायिकेनोद्योतकरेण कलापव्याकरणस्य वृत्तिकारेण दुर्गसिंहेन, वाचस्पतिमिश्रेण, शृङ्गारप्रकाशस्य प्रणेत्रा भोजेन च स्वीकृतम्। तेषां वाक्यानि इत्थं सन्ति।

१. महर्षिणोद्योतकरेणोक्तं न्यायवार्तिके–'सामान्यञ्च कारकाणां क्रियानिमित्तत्वं"[३]

१. कृष्णकान्तीटीका पृ.सं. २९२
२. शब्दशक्तिप्रकाशिका ॥ कारिका ॥ ६७ ॥ पृ. २९४
३. न्यायवार्तिक - अध्याय २ आह्निक १ सूत्र १६ पृ. १९६

२. दुर्गसिंहः कलापव्याकरणस्य वृत्तिटीकायाम्-

**"क्रियानिमित्तं कारकं लोकतः सिद्धम्"**[१]

३. वाचस्पतिमिश्रः न्यायवार्तिकतात्पर्यटीकायाम्-

**"क्रियानिमित्तस्य च कारकत्वात्"**[२]

४. भोजराजःशृङ्गारप्रकाशे- "क्रियानिमित्तं कारकम्"[३]

क्रियानिमित्तत्वमित्यत्र क्रियापदार्थः धातुजन्योऽर्थः क्रियेति। धात्वर्थविषये वैयाकरणेषु मतद्वयं वर्तत इति। फलावच्छिन्नव्यापारे[४] एव धातोर्शक्तिरित्यखण्डशक्तिवादिनां मतमिति। सखण्डशक्तिवादिनां नये तु धातोः फले व्यापारे च पृथग् पृथग् शक्तिरिति। अखण्डशक्तिवादिनां नये तु कर्तृवाच्यप्रयोगस्थले फलावच्छिन्नव्यापारे धातोरेकैव शक्तिर्भवतीति। इदं मतं नागेशः स्वीकरोति। फलावच्छिन्नव्यापारे धातोर्शक्तिरिति ये स्वीकुर्वन्ति। तेषां नये ग्रामं गच्छति इत्यत्र गम्धात्वर्थः संयोगावच्छिन्नव्यापारः (संयोगजनको व्यापारः) स च ग्रामे नास्ति। अतस्तत्र कारकलक्षणस्याव्याप्तिर्न दर्शयितुं शक्यत इति। परन्तु गम्धात्वर्थतावच्छेदकस्योत्तरदेशसंयोगस्य सिद्धौ ग्रामः कारणं भवत्येव। अतः प्रकृतकारकलक्षणस्य ग्रामे समन्वयो भवतीति।

धात्वर्थः फलं व्यापारश्च पृथग् पृथगिति अर्थाद् धातोर्शक्तिः फले व्यापारे चेति। अस्य मतस्योपस्थापनं कुर्वन्नाह नागेशभट्टः।

"फलव्यापारयोः पृथक् शक्तिः"[५] अत्र श्रीमद्दुर्बलाचार्यैरुच्यते-

"फलावच्छिन्नव्यापारस्य धात्वर्थत्वे विशेष्यविशेषणभावे विनिगमनाविरहादवच्छेदकगौरव-मेकदेशान्वयापत्तिश्च।"[६] भट्टोजीदीक्षित इदं मतमेव स्वीकरोति। अस्मिन् मते गम्धात्वर्थ उत्तरदेशसंयोगः पादप्रक्षेपादिस्वरूपा क्रिया च। "ग्रामं गच्छत्यत्यत्र ग्रामः संयोगस्वरूपस्य धात्वर्थस्य सिद्धौ कारणं वर्तत इत्यस्माद्धेतोः कारकलक्षणस्य सङ्गतिर्भवति। प्रकृतकारकलक्षणस्य तात्पर्यमिदं ज्ञातव्यं यत् साक्षाद् वा परम्परया सम्बन्धेन क्रियायाः निष्पत्तौ यत् कारणं भवति तदेव कारकमिति।

---

१. कलापव्याकरणस्य वृत्तिटीकायां २-४-१५ पृ. १६
२. न्यायवार्तिक तात्पर्यटीका २-२-६२ पृ. सं. ६६४ (कलकत्ता प्र.)
३. शृङ्गारप्रकाश द्वितीयप्रकाश पृ. ४२
४. इति नव्याः स्वीकुर्वन्ति व्युत्पत्तिवादः (फलावच्छिन्न व्यावारः धात्वर्थ इत्येबोचितम् पृ. सं. २२९)
५. वैयाकरणसिद्धान्तलघुमञ्जूषा पृ. ५४०
६. वैयाकरणसिद्धान्तलघुमञ्जूषा कुञ्जिकाटीका पृ. सं. ५४१

अत एव कारकचक्रस्य माधवीटीकायामुक्तम्–

"क्रियाकारणत्वं साक्षात्परम्परासाधारणप्रयोजकत्वमेव"[१] इति। तथाच "ब्राह्मणाय गां ददाति" इत्यत्र "ब्राह्मणः" सम्प्रदानकारकमिति। दानदाता यदा पृच्छति "तुभ्यं गां ददानि" तदा ब्राह्मणः "ददस्व"[२] इत्युक्त्वा स्वीकृतिं ददाति। तदनन्तरं दानक्रियां प्रति कारणं स भवति। दानव्यापारस्य स साक्षात्कारणं नास्ति अपितु परम्परया कारणभिति। अनुमतिं प्रदायैव दानव्यापारसिद्धौ कारणत्वमिति। एव परम्परया सम्बन्धेन धात्वर्थव्यापारं प्रति कारणत्वात्तस्यैव सम्प्रदानसंज्ञा भवतीति।

वृक्षात् पर्णं पतति इत्यत्र वृक्षस्यापादानकारकत्वमिति। पर्णे या पतनक्रिया भवति। तस्याः वृक्षपर्णयोः संयोगमवरुणद्धि। तस्य संयोगस्य नाशं विभागक्रिया करोति। ततः पर्णस्य पतनं भवति। तथाच पतनक्रियायाः निष्पत्तौ पर्णः साक्षात्सम्बन्धेन कारणं भवति। परन्तु वृक्षस्य पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनक्रियानिमित्तत्वमिति। यतोहि वृक्षे पतनप्रतिबन्धकसंयोगनाशकविभागानुकूला क्रिया यावत् न भवति तावत् पर्णस्य पतनक्रियायाः निष्पत्तिर्न भवति। तथाच प्रकृतकारकलक्षणस्य वृक्षे सत्त्वात् भवति लक्षणसमन्वयः।

भवानन्दतर्कवागीशनये क्रियानिमितत्वमिति[३] लक्षणं न समीचीनमिति यतोहि क्रियायाः सिद्धौ परम्परासम्बन्धेन यत् कारणं भवति तत् कारकमिति रीत्या सम्बन्धिनि कारकत्वस्य प्रसक्त्यापत्तिः। यथा देवदत्तः चैत्रस्य तण्डुलं पचति इत्यत्र पाकक्रियायाः निष्पत्तौ देवदत्तः तण्डुलश्चैव साक्षात्सम्बन्धेन कारणं भवति। देवदत्तस्य पाकक्रियायै अग्नेः प्रज्वलनं स्थाल्यां जलस्य तण्डुलस्य च निक्षेपव्यापारादयः तण्डुले विक्लितिव्यापारश्च भवन्ति। चैत्रः क्षेत्रे कर्षणादिकार्यं सम्पाद्य तण्डुलान् उत्पादयति। स च पाकं न करोति। तण्डुलान् उत्पाद्य पाकाय स यज्ञदत्तं ददाति। स च परम्परासम्बन्धेन पाकं प्रति कारणं भवत्येव। अतः सम्प्रदानस्यापादानस्येव च परम्परासम्बन्धेन पाकं चैत्रस्य निमितत्त्वात्तत्रातिव्याप्तिर्दुवारैव। वैयाकरणास्तु "सम्बन्धिनि कारकत्वं नाभ्युपगच्छन्ति। यतोहि सम्बन्धिनः क्रियया सह नान्वयोऽपि तु नामार्थेन सह अन्वयो भवति। अतः उक्तकारकलक्षणस्य षष्ठ्यर्थस्य सम्बन्धस्य प्रतिपादिका या षष्ठी विभक्तिर्तत्रैवातिव्याप्तिर्दुवारैवेति।[४]

अत एव नैयायिको जयराम आह–

---

१. कारकचक्रं माधवीटीका पृ. सं. २

२. तुभ्यं ददानीत्युक्ते ब्राह्मणो यदि ददस्वेति ब्रूयात् तेन ब्राह्मणः इच्छामनुमाय दाने अनिष्टसाधनताज्ञाननिवृत्त्या इष्टसाधनज्ञानाद् दाननिष्पत्तिरिति अनुमतिप्रकाशनद्वारा ब्राह्मणस्य दानप्रयोजनकत्वमिति माधवीटीकाकारकचक्रस्य पृ. २

३. क्रियानिमित्तत्वं कारकत्वमिति न सामान्यलक्षणम् का. च. पृ. १

४. सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन सम्बन्धिनि चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रादावतिव्याप्तेः। कारकचक्रम् पृ. २

"कारकत्वं नाम न क्रियानिमित्तत्वम्।[1] चैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तेः।" एवं जयकृष्णतर्कालङ्कारोऽपि वदति "क्रियानिमित्तत्वं कारकत्वमिति वैयाकरणाः।[2] तन्न मैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि मैत्रे कारकत्वापत्तिः।"

यथा भवानन्दतर्कवागीशः उक्तकारकलक्षणस्य खण्डनं करोति तथैव मीमांसकः[3] गागाभट्टश्चापि निराकरोतिः तस्य कारकलक्षणम्।

१. वस्तुतः भवानन्दतर्कवागीशनये तु विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वमिति।[4] उक्तकारकलक्षणस्य तात्पर्यन्तु यः नामार्थो विभक्त्यर्थद्वारा क्रियायां साक्षात्परम्परया वान्वितो भवति तत्कारकमिति। लक्षणे विभक्त्यर्थस्याभिप्रायस्तु सुव्विभक्तेरर्थः वा तिङ्विभक्तेरर्थः। कर्तृवाच्यस्थले सुप्विभक्तिप्रथमार्थः आश्रयत्वम् तिङ्विभक्त्यर्थः कृतिश्च उक्तविभक्त्यर्थयोः माध्यमेन यः क्रियायामन्वितो भवति तदेव कारकत्वमिति। यथा चैत्रः पचतीत्यत्र चैत्रपदोत्तरं यत् सुप् (सु) विभक्तिर्तस्यार्थ एकत्वम्, पच्पदोत्तरतिप्रत्ययार्थः कृतिः उक्तयोः विभक्त्यर्थयोः द्वारा चैत्रस्य पाकक्रियायामन्वयो भवतीति। अत एव चैत्रे प्रकृतकारणलक्षणस्य समन्वयो भवतीति। कर्मवाच्यस्थले "चैत्रेण तण्डुलः पच्यते" इत्यत्र चैत्रपदोत्तरतृतीयाविभक्त्यर्थः कृतिः। विभक्त्यर्थकृतिद्वारा पाकक्रियायां चैत्रस्यान्वयात् चैत्रे कारकलक्षणस्य समन्वयो भवति। अत्र शाब्दबोधस्याकारस्तु चैत्रनिष्ठकृतिनिरूपकपाक-जन्यविक्लित्याश्रयः[5] वर्तमानकालिकः एकत्ववान् तण्डुलः इति। चैत्रः तण्डुलं पचतीत्यत्र तण्डुलस्य पाकक्रियायां द्वितीयार्थकर्मत्वद्वारा अन्वयो भवत्येव अत एव तण्डुलस्य कारकत्वमिति। अत्र शाब्दबोधस्तु तण्डुलनिष्ठकर्मत्वनिरूपकविक्लितिजनकपाकानुकूलकृत्याश्रयः[6] वर्तमानकालिकः एकत्ववान् चैत्र इति, कुंठारेण छिनत्ति इत्यत्र कुठारस्य छेदनक्रियाया तृतीयाविभक्त्यर्थकरणत्वेनैवान्वयो जायत इति। विप्राय गां ददाति इत्यत्र विप्रस्य (सम्प्रदानस्य) दानक्रियायामन्वयः चतुर्थ्यर्थस्य सम्प्रदानत्वस्य चोद्देश्यत्वस्य परम्परया भवति। तथाच विप्रस्यापि कारकत्वं सम्भवति। वृक्षात् पर्णं पततीत्यत्र वृक्षेऽपि कारकत्वं सम्भवति। अत्र पञ्चम्यर्थस्य अपादानत्वस्य वावधित्वस्य माध्यमेन वृक्षस्य पतनक्रियायामन्वयो भवत्येवेति कारकलक्षणस्य सङ्गतिरिति। गृहे चैत्रः स्थाल्यामोदनं पचतीत्यत्र गृहम् स्थाली च परम्परासम्बन्धेन पाकक्रियायामन्वितो भवति। तत्र सप्तम्यर्थः आधारत्वमिति। चैत्रकर्तुः आधारं गृहमोदनरूपकर्मत्वस्य आधारः स्थाली च वर्तते। अत एवात्र गृहं स्थाली च कारकमिति। भवानन्देन यत्कारकस्य लक्षणं

१. कारकवादार्थः पृ. सं. ३
२. सा.म. पृ. ३२-३३
३. ननु किमिदं कारकत्वम्। न तावत् क्रियाप्रयोजकत्वम्। देवदत्तस्य तण्डुलं पचतीत्यत्रानुमतिद्वारा क्रियाप्रयोजके देवदत्तेऽतिप्रसङ्गात्।। भाट्टचिन्तामणिः (तर्कपादः) पृ. ९५
४. कारक चक्रम् पृ. सं. ३
५. कर्मवाच्यस्थले व्यापारजन्यफलं धात्वर्थः।
६. कर्तृवाच्यस्थले फलावच्छिन्नव्यापारः धात्वर्थ इति।

स्वीकृतं तत्तु मुख्यभाक्तकारकयोः सङ्गतं भवति। विभक्त्यर्थद्वारा क्रियायामन्वितत्वे सति धात्वर्थस्य क्रियायां सिद्धौ साक्षात् का परम्परया यत्कारणं भवति तत्तु मुख्यं कारकमिति। यथा ग्रामं गच्छतीत्यत्र ग्रामः मुख्यं कारकमिति। यतोहि द्वितीयार्थः कर्मत्वं, तेन माध्येन गमने तस्यान्वयो भवति। एवञ्च उत्तरदेशसंयोगरूपस्य फलस्य आश्रयत्वेन गमनक्रियासिद्धौ परम्परया कारणञ्च भवति। क्रियायाः सिद्धौ साक्षात् परम्परया यत्कारणं न भवति अपितु केवलविभक्त्यर्थद्वारा क्रियान्वितो भवति तत्तु गौणकारकमिति। यथा घटं जानाति[1] चैत्र इत्यत्र घटस्य गौणकारकत्वम्। अत्र ज्ञाधातुः सविषयकस्य वाचको भवति। अत्र द्वितीयार्थः विषयता, सा च घटपदार्थे तिष्ठति। अतः जानाति क्रियापदान्वयः घटपदार्थे द्वितीयार्थविषयतासम्बन्धेन भवति। कर्मत्वविवेचनस्य स्थले भवानन्देनोक्तं-क्रियायाः सिद्धौ साक्षात् वा परम्परया कारणत्वे सति क्रियाजन्यफलाश्रयत्वमेव मुख्यकर्मकारकत्वमिति। मुख्यगौणकारकयोः लक्षणमनेन रूपेण वक्तुं शक्यते–

"क्रियानिमित्तत्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यकारकत्वम्"[2] अर्थात् क्रियायाः साक्षात् वा परम्परया प्रयोजकत्वे सति सुब्विभक्तिद्वारा वा तिङ्विभक्तिद्वारा क्रियान्वयित्वं मुख्यकारकत्वमिति।

"क्रियाया अनिमितत्त्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं भाक्तकारकत्वमिति"[3] अर्थात् क्रियायाः साक्षात् वा परम्परया यः प्रयोजको न भवति परन्तु विभक्त्यर्थद्वारा यस्य क्रियायामन्वयो भवति तत्गौणकारकमिति।

प्रकृतकारकलक्षणस्य "चैत्रस्य पचति इत्यत्र षष्ठ्यन्तपदं "चैत्रस्य" इत्यस्य पाकक्रियाया-मन्वयात् तत्रातिव्याप्तिरिति चेन्न भवानन्देनोच्यते "चैत्रस्य पचति इत्यत्र षष्ठ्यर्थः सम्बन्धित्वं तस्य पाकक्रियायामन्वयो भवति अपितु षष्ठ्यन्त पदस्य प्रातिपदिकार्थेन सह आकाङ्क्षा भवति। उक्तकारकलक्षणस्य परिष्कारं कुर्वन्नाह भवानन्दतर्कवागीशः–

कर्तृत्वकर्मत्वादिषटकान्यतमद्वाराक्रियान्वयित्वं कारकत्वमि[4]ति तत्रानुकूलकृतिमत्त्वं कर्तृत्वम्।[5] यथा चैत्रः पचति इत्यत्र पाकानुकूलकृतिमत्त्वस्य चैत्रे सत्त्वात् भवति लक्षणसमन्वयः।[6] तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्मत्वमिति भवानन्देन उक्तम्। रघुनाथशिरोमणिना तु

१. सविषयकपदार्थाभिधायिजानात्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्मकत्वम्। कारकचक्रम् पृ. सं. २१-२२
२. कारकचक्रम् माधवी टीका पृ. सं. ३
३. तदेव पृ. सं. ३
४. कारकचक्रम् पृ. सं. ६
५. कारकचक्रम् पृ. सं. १५ अत्राहुः "अनुकूलकृतिमत्त्वं कर्तृत्वम्।
६. कारकचक्रम् पृ. सं. २०

"धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति। परसमवेतक्रियाजन्यफलशालित्वमपि[१] कर्मणः लक्षणमिति। कारकान्तरेऽचरितार्थत्वे सति हेतुत्वं करणस्य[२] लक्षणम् यद्वा फलायोगव्यवच्छिन्नकारणत्वं करणत्वमिति। भवानन्दतर्कवागीशनये व्यापारवत्कारणं[३] करणस्य लक्षणमिति। कारकत्वे सति कर्तृव्यापारविषयत्वं कारणत्वमित्यपि केचित् वदन्ति। तत्क्रियाकारणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति।[४] यद्वा अदृष्टाद्वारकतत्क्रियाकारणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति। तत्क्रियाकारणीभूत-कर्मजन्यधात्वर्थतावच्छेदकफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमित्यपि केचित् वदन्ति। भवानन्दतर्कवागी-नापादानस्य लक्षणद्वयं प्रदर्शितं कारकचक्र इति। परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम्।[५] वा विभागावधित्वमपादानत्वमिति।[६] अधिकरणस्यापि अनेकानि लक्षणानि सन्ति। कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपाकारक-अधिकरणस्य लक्षणम्।[७] भवानन्दतर्कवागीशनये परम्परया क्रियाश्रयत्वमधिकरणस्य लक्षणम्। प्राचीनमते सप्तम्यर्थः अधिकरणत्वं परन्तु नव्यमते सप्तम्यर्थः आधेयत्वमिति। विस्तरभयादत्रैव विरम्यते। विस्तरस्तु तत्तत्कारकनिरूपणावसरे सयुक्तिकं वक्ष्य इत्यलम्।

---

१. कारकचक्रम् पृ. सं. १९

२. कारकचक्रम् पृ. सं. २२

३. व्यापारवत्कारणं करणमिति, तेन हस्तादौ कुठारादौ च नाव्याप्तिः। कारकचक्रम् पृ. सं. ५७

४. कारकचक्रम् पृ. सं. ८२

५. कारकचक्रम् पृ. सं. ९३

६. कारकचक्रम् पृ. सं. ९३

७. कारकचक्रम् पृ. सं. ९९

# काव्यप्रकाशटीकाकर्तुर्भट्टगोपालस्य स्वोपज्ञान्युदाहरणानि

**डॉ. उमाकान्तचतुर्वेदी**

वाग्देवतावतारो मम्मटः स्वकीयं समयं यावद् विरचितस्य काव्यशास्त्रस्य समेषामपि सिद्धान्तपथानां कृत्स्नवित्। ध्वनिमार्ग एवास्य सिद्धान्तमार्गः। कविसंविदमारभ्य रसिकसंविदं यावदुद्यत्प्रवाहा येयं कविकर्मप्रवणा सरस्वती, सा हि कात्स्न्र्येनैव प्रतिपन्ना काव्यप्रकाशस्य काव्यलक्षणप्रबन्धेन। श्रीमद्भगवद्गीता-दिग्रन्थानामिवास्यापि काव्यप्रकाशस्य टीकाबाहुल्यम्। अत एवोक्तं महेश्वरभट्टाचार्येण-

**काव्यप्रकाशस्य कृता गृहे गृहे टीकास्तथाप्येष तथैव दुर्गमः।**
**सुखेन विज्ञातुमिमं य ईहते धीरः स एतां निपुणं विलोक्यताम्।।**[1]

तत्र टीकाकृत्सु गोविन्दठक्कुरः गोकुलनाथः भीमसेनदीक्षितस्तथा चान्येऽपि टीकाकाराः शास्त्रसम्पन्नेषु भृशमादृताः। अथापि साहित्यचूडामणिकारमिमे नातिशेरते। काव्यप्रकाशस्य विमर्शिनीति प्रथितायाष्टीकायाः अपरं नाम साहित्यचूडामणिरिति। लौहित्योपाह्वो भट्टगोपालो ह्यस्याः रचयिता। अयमेव हि केवलः साहित्यसम्प्रदायवेत्ता। अन्ये सर्वेऽपि शास्त्रान्तरवासनावासितान्तःकरणाः विचक्षणाः पद-वाक्य- प्रमाणादिसिद्धान्तरसरण्या काव्यप्रकाशं व्याचक्ष्युः। स हि भरतभामहोद्भटदण्डिवामनरुद्रटा-नन्दवर्धनधनञ्जयभोजकुन्तकाभिनवगुप्तरुय्यकाणां ग्रन्थान्, तन्मतानि चाक्षरशोऽनुशील्य काव्यप्रकाशं व्याख्यत्। भरतमुनेर्नाट्यशास्त्रं बीजं खलु साहित्यसिद्धान्तमहीरुहस्य। अतो भामहमारभ्येतावत्कालं यावदखण्ड एव साहित्यशास्त्रस्य सम्प्रदायः। परं दौर्भाग्यवशादनेके ग्रन्था: विलुप्तिङ्गताः। न हि केवलं भट्टनायकादीनां विवरणादयो ग्रन्था एव विलुप्ताः, अन्यान्यपि काव्यप्रकाशरूपस्य मानससरसो यानि पूरकाणि साहित्यस्रोतांसि तानि नाद्यापि सुलभानि। गोविन्दठक्कुरादिभिस्तानि अनालोच्यैव पूर्वपक्षाः कल्पिताः। व्याख्यातानि चोत्तराणि। येन काव्यप्रकाशपाथोनिधिनिर्मन्थने मतभेदोऽजनि। निर्मिताश्च तैस्तैर्भूयस्यष्टीकाः। चूडामणि-कारश्चूडामणिर्हि साहित्यमर्मवित्सु। स पुनः पूर्वपक्षानिमान् साहित्यशास्त्रस्य प्राचीनेभ्यो ग्रन्थेभ्योऽवचिनोति, प्रशमयति चोत्तरपक्षस्वरूपविषयकं सन्देहसन्दोहम्। महामतिरयं व्यक्तिविवेकादिषु व्यक्तिविरोधीन्यपि तत्त्वानि बाढमाद्रियते। पदे पदे च ह्येषामुद्धरणप्रदानेन समेधयते काव्यप्रकाशस्य प्रामाणिकताम्। महानुभावोऽयमानन्दवर्धनस्येवाभिनवगुप्तस्यापि, भामहस्येवोद्भटस्यापि वामनस्येव रुद्रटस्यापि प्रमेयपदार्थान् यथास्थानं प्रतिपाद्य विस्मापयत्येव सर्वान् समीक्षकसन्दोहान्। किं बहुना, अभिनवगुप्तस्य कविसहृदयाख्यसरस्वतीतत्त्वमेव समुपोढयौवनमत्यर्थं नरीनृत्यते विमर्शिन्याम्। शास्त्रान्तरेष्वपि वाक्यपदीय-प्रमाणवार्तिक-श्लोकवार्तिक-स्पन्दकारिका-ईश्वरप्रत्यभिज्ञा-तन्त्रालोकप्रभृतीन्

---

१. का.शा. इतिहास (काणे),-पृ. ३४३

ग्रन्थान् प्रस्तूय, संस्तूय च तच्छास्त्रसिद्धान्तसरणीमनुक्षणमुपस्थापयत्येव स्वीयं महामेधावित्वम्। नेदृशी स्थितिर्गोविन्दठक्कुरगोकुलनाथादीनां टीकासु।

यद्यपि श्रीविद्याधरचक्रवर्तिनो बृहतीनाम्नी काव्यप्रकाशटीका सम्प्रदायानुसारिणीति प्रसिद्धिः, किन्त्वेतस्याष्टीकायाः बृहतीत्वं सम्प्रदायप्रकाशिनीत्वमित्युभयमपि काव्यप्रकाशविमर्शिनीनाम्नि साहित्यचूडामणावाञ्जस्येन प्रतिपदं प्रकाशते। प्राचीनालङ्कारिकग्रन्थसन्दर्भाणामिवात्र दर्शनग्रन्थानाम्, विशेषतश्च कश्मीरशैवशास्त्रादिसन्दर्भाणामपि नितान्तमेवौदार्येण तलस्पर्शित्वेन निगूढमुपस्थापनमवलोक्यते। किञ्च, विचारणायामयं मननतरितीर्णविद्यार्णवस्य तैलङ्गोत्कर्षशिरोमणेर्जगन्नाथस्यापि न केवलं पाण्डित्यप्रकर्षं परिचिनोति अपितु अमुष्याखर्वगर्वकवलीकृतसकलकविराजहंसा जृम्भा अपि तथैव—

**कविर्लोके वाग्मी गमक इति ये केचन गुणैरखर्वं गर्वेयुः परपरिभवारम्भसुभटाः।**
**समायोगे तेषां सह सदसि गोपालकविना, कथङ्कारं तिष्ठेदशिथिलमहङ्कारगरिमा।।**[1]

अपि चानिशं मधुधारामुद्गिरन्ती अस्य सरसाऽपि सरस्वती क्वचिच्चण्डीत्यपि। यथाऽत्रैव ग्रन्थस्यान्ते—

**दिशं दिशमविक्लवप्रतिहतलोचनसञ्चर-**
**न्नधीरपुरुषोज्झिते ध्वनि महाध्वनि प्रेक्ष्यताम्।**
**अयं स परमो मम प्रतिभटोऽस्तु कोऽप्यस्ति**
**चेदयं चतुरचण्डिमा विरुदडिण्डिमस्ताड्यते।।**[2]

एवं सर्वतन्त्रस्वतन्त्रो भट्टगोपालः कदा कुत्र वा जनिमवाप्य समलञ्चकार भारतभुवमितीदानीमपि विद्यावतां विसंवादः। कतिपयैः प्रमाणैः प्रथममेतदेवास्माभिर्विचारणीयम्। शारदातनयः भावप्रकाशनमित्याख्येऽलङ्कारग्रन्थे आत्मनः पितुर्नाम भट्टगोपाल इति निर्दिशति। यो ह्यधीताखिलविद्यः शारदासमुपासक आसीत्। मन्ये असावेवास्य भट्टगोपालश्चूडामणेः कर्ता, इति कतिपयैः प्रमाणैर्विज्ञायते—

(१) शारदातनयः भावप्रकाशनस्य प्रथमाधिकरणे आभिः कारिकाभि स्वीयं परिचयं प्रस्तौति—

**आर्यावर्ताह्वये देशे स्फीतो जनपदो महान्।**
**मेरूत्तर इति ख्यातस्तस्य दक्षिणभागतः।।५।।**

**ग्रामो मारठपूज्याख्यो द्विजसाहस्रसम्मितः।**
**तत्र लक्ष्मणनामासीद्विप्रः काश्यपवंशजः।।६।।**

**त्रिंशता ऋतुभिर्विष्णुं तोषयामास वेदवित्।**
**वेदानां भाष्यमकरोन्नाम्ना यो वेदभूषणम्।।७।।**

---

१. का.प्र.वि.पृ. ४८५
२. का.प्र.वि.पृ. ४८५

**तस्य श्रीकृष्णनामासीत् त्रः कृष्ण इवापरः।**
**वेदानधीत्य निखिलान् शास्त्राण्यप्यखिलानि च।।८।।**

**स पुत्रार्थी महादेवं वाराणस्यामतोषयत्।**
**तस्यासीद् भट्टगोपालनामा सूनुः सुलोचनः।।९।।**

**अष्टादशसु विद्यासु बहुशः स कृतश्रमः।**
**उपास्य शारदां देवीं पुत्रं लेभे गुणोत्तरम्।।१०।।**

**तमाह्वयत् पिता प्रीतः शारदातनयाख्यया।**
**अधीतवेदवेदाङ्गो वर्धमानः पितुगृहे।।११।।**

अतः सुस्पष्टमेवारोहति बुद्धिपदं यद्भट्टगोपालः वेदवेदाङ्गेषु निष्णातः भावप्रकाशनकर्तुः शारदातनयस्य पिताऽऽसीदिति नात्र मनागपि संशीतिः। लौहित्यञ्चोपाधिश्चूडामणिकारस्य।

(२) साहित्यचूडामणि-सुधासागरेति टीकाद्वयविभूषितस्य काव्यप्रकाशस्य सम्पादकास्सुधीवरा अस्माकमादरणीयाः म. म. पं. रेवाप्रसादद्विवेदिनोऽपि विविधाभिर्युक्तिभिश्चूडामणेर्विधातारं भट्टगोपालं, शारदातनयस्य पितरं भट्टगोपालञ्च देशकालसम्प्रदायादिभिरविशेषमेवाङ्गीकुर्वन्ति। तथा हि-

(क) चूडामणेष्टीकायाः विमर्शिनीत्यपराभिधानेन, नियतिपरामर्शादिशब्दानां शैवागमरीत्या व्याख्यानेन, आरम्भतोऽवसानं यावद् ग्रन्थे पदे-पदे स्पन्दकारिका-ईश्वरप्रत्यभिज्ञा- वाक्यपदीयादिशैवागमसिद्धान्त-परिपूर्णानां ग्रन्थानामुद्धरणात् शैवागमसाम्प्रदायिकः कश्मीरदेशवासी ह्ययं जन इत्याञ्जस्येनानुमातुं शक्यते।

(ख) अलङ्कारसर्वस्वोद्धरणादनुद्धनुरणाच्च तत्पश्चाद्वर्तिनामलङ्काररत्नाकरालङ्कारविमर्शिनीप्रभृतीनां महत्त्वमण्डितानामलङ्कारग्रन्थानामवश्यमेवास्य द्वादशत्रयोदशयिशुवर्षशतकयोः सन्धिकाल एवास्य स्थितिकालोऽनुमातुं शक्यते।

(ग) किञ्च, केरलीयदेशस्य कुलशेखरनाम्नो (११२५ ई.) नृपतेः साहित्यचूडामणौ स्मरणात्तस्यैवास्थानगोष्ठीशेखरालङ्कारोऽस्य उपर्युक्त एव कालः समर्थ्यते।

(घ) पदवाक्यप्रमाणादिशास्त्राणां पारदृश्वानां भरत-भामह-दण्डिप्रभृतीनां साहित्यसम्प्रदाया-नामामूलचूल-मनुशीलनं कुर्वता काव्यप्रकाशो व्याख्यायिष्ट, यत्रैतदुपजीव्यानां समेषामपि साहित्यस्रोत-सामुद्धाराय प्रायतिष्ट। इदं प्रथमतया रत्नापणकारः कुमारस्वाम्येव (१५०० ई.) अस्य चूडामणिं स्मरतीति नास्य कुमारस्वाम्यपेक्षयाऽधिकं प्राचीनत्वमिति विभावनीयम्।

(ङ) शारदातनयोऽभ्यस्तशैवशास्त्रः। यीशुसंवत्सरस्य द्वादशत्रयोदशशतकीयसन्धिकाल एवास्य स्थितिकालः। भारतस्य दक्षिणा दिगेवास्याभिजनः। भट्टगोपालस्यापि त एव देशकालसम्प्रदायः। अतश्चूडामणिकार एवास्य पिता। भावप्रकाशनोक्त्या शारदातनयोऽपि तत्पितुः शारदायाः उपासनायाः प्रतिफलम्। एवं शारदोपासना समानो धर्म उभयोर्भट्टगोपालयोः। भट्टगोपालः प्रत्युल्लासारम्भं सरस्वतीमभिष्टौति तथा च न विस्मरति उल्लासपर्यवसानेऽपि तामिमां वाग्देवताम्। अथापि चूडामणौ शारदा सरस्वतीनाम्ना

स्तूयते, तत्र तु शारदेत्याख्ययेति विशेषः केवलमेकैव। एवमुभयोरभेदप्रत्यायकानामन्येषां हेतूनां सति सम्भवे, वाग्देवतायाः शारदानाम्नाऽनुल्लेखस्य भेदसाधकत्वं पंक्तिरथनाम्ना समुल्लेखस्य दशरथे तद्भिन्नसाधकत्वात्किञ्चित्करत्वमेवेति मन्ये।

एवं शारदातनयपिता भट्टगोपाल एव चूडामणिकारो भट्टगोपालः। ततश्चार्यावर्तस्य मेरूत्तर इति स्फीतो महान् जनपदः। तस्यार्वाच्यां माठरपूज्यनाम्नि विहितवसतिः, काश्यपः, सम्पादितत्रिंशद्विष्णुयागो वेदभाष्यनिर्माता लक्ष्मणनामपितामहः, श्रीकृष्णनामपितृको भट्टगोपालः। यो हि काश्यामुपास्य परां देवतां शारदामवाप शारदातनयाभिधं तनुजन्मानमिति माधवाचार्येण धर्मशास्त्रीयव्यवस्थासु प्रामाणिकत्वेन स्मर्यमाणो गोपालभट्ट एवायमिति काव्यप्रकाशस्य सम्पादकानां श्रीमतां रेवाप्रसादद्विवेदिमहाशयानां मतं तेषामेव भूमिकाभागतः समुद्धृत्य सहृदयानां समक्षं प्रस्तुतम्।

(३) किन्तु भावप्रकाशनग्रन्थस्य सम्पादकः, काव्यप्रकाशस्य भट्टगोपालः शारदातनयपितुर्भट्टगोपालाद्भिन्न इत्युल्लिखति। तथा हि- 'कुछ विद्वानों का कहना है कि मम्मटप्रणीत काव्यप्रकाश के टीकाकार भट्टगोपाल और शारदातनय के पिता भट्टगोपाल दोनों एक हैं। लेकिन दोनों का अभिन्न ठहराना युक्ति संगत नहीं है। क्योंकि मम्मट के पश्चात् किसी भी लेखक ने टीकाकार भट्टगोपाल को उद्धृत नहीं किया है। कुमारस्वामी ने, जिसका समय १५वीं शताब्दी निश्चित है, टीकाकार भट्टगोपाल को उद्धृत किया है। इससे सिद्ध होता है कि टीकाकार भट्टगोपाल का समय १५वीं शताब्दी का पूर्वार्ध है, जबकि शारदातनय १२वीं शताब्दी में ही हो गये, तो क्या उनके पिता उनसे परवर्ती काल में हुये होंगे? अतः शारदातनय के पिता भट्टगोपाल के साथ टीकाकार भट्टगोपाल के साम्य की सम्भावना एक हास्यास्पद दुराग्रह ही कहा जा सकता है।' (द्र. भावप्रकाशन, भूमिका, पृ. १, चौ.सं. सीरिज द्वि. सं. १९८३)।

परं नैतन्मतं सद्युक्तिमयम्। पञ्चदशयिशुशतके जातेन कुमारस्वामिना भट्टगोपालस्य उल्लेखः न तस्य परकालिकत्वसाधकत्वे नियामकं न वा, पूर्वकालिकसद्भावसाधने दृष्टिरूपम्। अतोऽनयोः एकत्वसाधकं द्वितीयमेव मतमस्माकं बुद्धा अद्वितीयम्।

इदानीमस्य काव्यवैभवमालोच्यते। केचित्केवलं कवयन्ति। समालोचनमात्रपरिमितलोचनधियः सुधियो भवन्ति केचित्। कतिपये चैतदुभयविरहिणो विद्वांसोऽपि भूयसा भवन्ति भाग्यभाजो मुकुलितलोचना आनन्दास्वादनमात्रपरमाः। एतत्त्रितयं समुदितरूपेण क्वचिदेव केषुचिद्भवति भव्येषु। किञ्च, विमर्शिन्याः विमर्शेनैतत्त्रितयं विभाति भट्टगोपाले। प्रमिताक्षरोऽप्यसौ सर्वस्वोद्घाटनपटुः। प्रमाणयति चायं पदे पदे मम्मटोत्कटवैदुष्यं प्राचामाचार्याणामुद्धरणेन। साहित्यसिद्धान्तविदोऽस्य काव्यसृष्टा अपि सिद्धत्वं साधयन्ति चूडामणा उदाहृतानि स्वोपज्ञानि पद्यपुष्पाणि। यानि दर्शं दर्शं न मनागपि हर्षं मुष्णाति सहृदयहृदयम्। अत एव मम क्षुद्रापि धीरधीरयत इवास्मिन् क्षोदिष्टे निबन्धे निवेदयितुं कवयितुश्चतुचण्डिमानमनवद्यञ्च कवित्वप्रतिभानम्।

चमत्कारचिन्तामणिः परिमलश्चेत्युभा अस्य रचने चूडामणा उद्धृते। तत्रादिमः शैवागमसिद्धान्तोद्घाटनपटुः दर्शनविमर्शनपरो वा कारिकात्मक इत्युद्धरणमेकमवलोक्यानुमीयते। तथा

हि-

**'यथा चोक्तं मया चमत्कारचिन्तामणौ वस्तु चेत्कथमित्यारभ्य-**
**रजतानुभवे शुक्तिर्न चिन्तामधिरोहति। शुक्तिकायाः प्रतीतौ च दूरे रजतवासना।।**
**बाधेन मेलके भाव्यं स कदाचिन्न लभ्यते। एवं बाधस्य दौर्बल्याद् भ्रान्तत्वं संविदो वृथा।।**
**यद् बुद्ध्योर्न विरोधोऽस्ति मिथो बाधनभिज्ञयोः।।**[१]

एवमनेकत्रास्य ग्रन्थस्य शैवागमसिद्धान्तस्योद्धरणानि टीकायामवलोकयितुं शक्यन्ते। अथापरः 'परिमलः' कदाचिन्निबन्धात्मा टीकाग्रन्थो वेत्यत्रानिर्णयमेवावगाहते मतिः। यतो हि तद्विषये केवलम्

**'तन्मदीयेषु परिमलप्रभृतिषु प्रबन्धेषु....'**[२] **इत्येतावन्मात्रमेवोक्तम्।**

काव्यप्रकाशस्य चूडामणौ टीकायामदितो ग्रन्थपरिपूर्तिं यावदुदाहरणात्मकानि पञ्चदश पद्यानि, येषु त्रीणि पद्यानि द्विरावृत्तानीति अष्टादशसु स्थलेषूक्तानि। पुनश्च मङ्गलात्मकानि सहैव काव्यशास्त्रीयपरम्परोद्घाटनपराणि संख्ययैकषष्टिपद्यानि। एवमाहत्य षट्सप्ततिः पद्यानि टीकायां 'ममैवे' ति कृत्वोद्धृतानीत्यसंशयमेव टीककर्तुः स्वोपज्ञानि। एकचत्वारिंशत्पद्यानि 'यथा ममैवे' त्यादिनिर्देशं विनैवोक्तानि, येषु द्वे गर्वोक्तिपरे इति कविकृते एव ते। किञ्च, अन्यान्यपि कविप्रणीतान्येवेति शैल्या स्वीकर्तुं शक्यन्ते। एवं सङ्कलनयामुष्यां टीकायां कविरचितानि सप्तदशोत्तरमेकशतं पद्यानि विद्यन्ते। परमत्र विस्तरभिया केवलं काव्यप्रकाशीयतत्त्वोद्घाटनपराणि उदाहरणमयानि पञ्चदश एव पद्यानि विशदीक्रियन्ते। तथा हि-

श्रीमन्मम्मटाचार्यः काव्यलक्षणप्रसङ्गे 'यः कौमारहरः स एव हि वरस्ता एवे' ति काव्यलक्षणस्योदाहरणं प्रस्तूय **'रसस्य च प्राधान्यान्नालङ्कारता'** इति वृत्ता उल्लिखति। अस्यायं भावः- रसस्य च प्राधान्याप्राधान्यलक्षणमवस्थायुगलं भवति। तत्र रसभावाद्यपेक्षयान्यस्य वाक्यार्थस्य रसभावादेर्वा अप्राधान्यं तद्गण्यतामलङ्कारत्वेन, यत्र च रसभावादीनां प्राधान्यं तत्र तस्यालङ्कार्यत्वमेव। तदुक्तं ध्वनिकृता-

**तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।**
**ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः।।१.१३**

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।।२.५**

परं मितवाङ् मम्मटो रसप्राधान्ये **'यः कौमारहरः'** इति केवलमलङ्कार्यस्यैव रसस्योदाहरण-मुपस्थापितवान्। नैषां रसभावादीनामप्राधानानाम्। टीकाकारः प्रथमं शृङ्गारकरुणयोर्मध्ये वाक्यार्थीभूतस्य करुणरसस्यैकं प्रसिद्धं पद्यमुदाहरति-**'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः'** इति, अत्र करुणरसस्य

---

१. काव्यप्रकाशविमर्शिनी पृ.६८२

२. विमर्शिन्याम् ७२३ तमे पृष्ठे

प्राधान्यादलङ्कार्यता, अप्राधान्याच्च शृङ्गारस्यालङ्कारता भवति। पुनश्च वाक्यार्थीभूतस्य भावप्राधान्यस्योदाहरणप्रसङ्गे स्वीयां मन्दाक्रान्तामवतारयति, यथा 'ममैवेत्युद्धरणेन-

**किं ते गण्डे कितव! कुटिलाताम्रमालग्नमेतत्**
**किं तन्मुग्धे परिमृशतु ते पाणिराज्ञतमाः किम्।**
**प्रष्टव्योऽयं? प्रणयकलहेष्वस्त्रमर्धं सुधांशोरि-**
**त्यालापो रहसि शिवयोः पेशलस्त्रायतां वः।।**[1]

अर्थात् हे कितव! एतत् ते गण्डे आलग्नं कुटिलताम्रं किम्? हे मुग्धे! तत् किं ते पाणिः परामृशतु। आः आज्ञातं किं? प्रणयकलहेषु सुधांशोः अर्धमस्त्रम्, इति रहसि शिवयोः अयं प्रष्टव्यः पेशलः आलापः वः त्रायतामिति वाक्यसम्बन्धः। अत्र पार्वतीपरमेश्वरयोरन्यप्रणयजन्योभयनिष्ठा रतिः शृङ्गरः। तद्विषयिणी कविनिष्ठा रतिश्च भावविषयतामालम्बते। एवमत्र पार्वतीपरमेश्वरविषयकस्य कविवर्तिनी रतेर्भावत्वमुपगतस्य वाक्यार्थतया प्राधान्यादलङ्कार्यता, शृङ्गारस्य चाप्राधान्यादलङ्कारता बोध्या।

तृतीयोल्लासे आर्थीव्यञ्जनायाः निरूपणप्रसङ्गे वक्तृबोद्धव्यादीनां वैशिष्ट्याद् व्यंग्यार्थप्रकाशन-मेकैकेनोदाहरणेन कृतवान् ग्रन्थकारः। 'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।' इत्यादिनाऽर्थान्तरव्यञ्जनसामर्थ्ये प्रतिपादितेऽपि पुनश्चोक्तं मम्मटेन-'**वक्त्रादीनां मिथः संयोगे द्विकादिभेदेन।**' अथैतेषां व्यञ्जकत्वं न केवलमेकैकेन वक्तृवैशिष्ट्येन, बोद्धव्यवैशिष्ट्येनापितु एकत्रैव द्वित्रादीनां वक्तृ-बोद्धव्यादीनामन्योन्यं योगेनापि गृह्यते। किन्तु मम्मटेन नैतदुदाहृतम्। श्रीभट्टगोपालः 'दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मिन् गृहे दास्यसी' त्यत्र वाच्यादर्थान्तरप्रतीतौ वक्तृबोद्धव्यादीनामनेकेषां वैशिष्ट्याद् व्यञ्जकत्वं प्रदर्श्य लक्ष्यादर्थान्तरप्रतीतावनेकेषां वैशिष्ट्येन व्यंग्यार्थबोधकत्वे स्वीयां प्राकृतमयीमार्यामुल्लासयति। तत्र लक्ष्यस्य यथा ममैवेत्यादिना-

**गामउड-घरपडोहर-सनीडरच्छाए वच्छा मा वच्च।**
**जत्थ वइवेढमूले दिट्ठिविसो अत्थि सुव्वए सप्पो।।**[2]

अत्र माता पुत्रमुपदिशति- हे वत्स! ग्रामीणगृहपृष्ठान्तरे सनीडरथ्यायां मा व्रज। यत्र वृत्तिबन्धमूले (वृक्षबन्धमूले) दृष्टिविषः सर्पः अस्ति इति श्रूयते। अत्र हालिकस्नुषायाः सर्प इति साध्यावसानलक्षणया कथनम्। तस्याः निश्चयमेव परिहरणीयत्वप्रख्यापनं व्यंग्यम्। तत्र च मातुर्वक्तृत्वम्। पुत्रस्य बोद्धव्यता 'गामउडेत्यादिना देशः, जत्थ वइवेढमूले' इत्यादिना, मा वच्च इत्यादिना च व्रजनस्य प्रकृतत्वात् प्रस्तावः। एवं वक्तृबोद्धव्यादीनामनेकेषां वैशिष्ट्यादत्र लक्ष्यादर्थान्तरावगमो भवति। किञ्च, व्यंग्यार्थादर्थान्तर-व्यञ्जकतायामपि स्वीयामेवार्यामुपन्यस्यति टीकाकारः-

**चुम्बसि जप्पावेन्ती दूअं सहि! कीस कर पओट्ठगअं।**
**मा मण्ण ईसालुभत्ता बिम्बोट्ठि! तुज्झ पाविट्ठं।।**[3]

१. का.प्र.वि.पृ.-२२
२. का.प्र.वि.पृ.-९८
३. का.प्र.वि.पृ.-९८

अत्र काचित् सखी नायिकां ब्रूते- हे सखि! हे विम्बोष्ठि! दूरं जल्पयन्ती करप्रकोष्ठगतं कथं चुम्बसि। तव ईर्ष्यालुभर्ता पापिष्ठं मा मन्येत इति। अत्र बिम्बभ्रान्त्या शुकस्तवाधरं खण्डयिष्यतीति व्यंग्यार्थः। ततश्च 'कस्य वा न होई रोषो' इत्यादिवदनेकधा व्यंग्यार्थप्रतीतिः, तन्न लिख्यते प्रपञ्चप्रसङ्गात्। अत्र सख्याः वक्तृत्वम्, नायिकायाः बोद्धव्यता, कीसं चुम्बसि इति निषेधे चुम्बनस्य प्रकृतत्वात् प्रस्तावः, बिम्बोष्ठीति वाच्यम्, मा मन्येतेति वाक्यम् अन्योपपतेः सन्निधिश्च सम्भवी। कीसं इत्यस्य संस्कृतं 'कीर' इति स्वीकृते सति अर्थोपपत्तौ महॉल्लाभः सम्पद्येत।

चतुर्थे उल्लासे भावध्वनेरुदाहरणप्रसङ्गे देव-मुनि-गुरु-नृप-पुत्रादिगोचरां रतिं भावत्वेनाङ्गीकुर्वाणो मम्मटोपाध्यायो देवविषयां मुनिविषयाञ्च रतिं क्रमेण 'कण्ठकोणविनिष्टमीश ते हरत्यघं सम्प्रतीत्यदि' चोदाहृत्योल्लिखति-'**एवमन्यदपि उदाहार्य्यमिति।**' तत्र नृपगोचरां रतिं भावत्वेनोदाहर्तुकामश्चूडामणिकारो स्वीयं स्रग्धरावृत्तमुपस्थापयति-

**सोऽयं नीलस्तुरङ्गो मम यवनपतिः प्राभृतं प्राहिणोद् यं,**
**भद्रः सोऽयं गजो मे समिति विलुलिता येन सौवीरसेना।**
**सेयं मे वामनेत्रा समजनि समरो यत्कृते राजपुत्रैरेवं**
**कारागवाक्षे कुलतिलक! भवद्वैरिणो व्याहरन्ति।।**[१]

कस्माच्चिद् राज्ञः पराजिताः कारागारे बद्धाः राजपुत्राः कारागारस्य गवाक्षात् स्वकीयान् गजान्, घोटकान्, स्त्रियश्चावलोकयन्तो मिथो व्याहरन्ति। तथा हि- यवनपतिः यं प्राभृतं प्राहिणोत् सोऽयं मम नीलस्तुरङ्गः, समिति येन सौवीरसेना विलुलिता सोऽयं मे भद्रः गजः, यत्कृते राजपुत्रैः समरः समजनि सेयं मे वामनेत्रा, हे कुलतिलक! कारागवाक्षे भवद्वैरिणः एवं व्याहरन्तीति सम्बन्धः। अत्र कविनिष्ठायाः नृपविषयायाः रतेर्भावस्योदाहरणम्। मित्रविषयायाः रतेर्भावस्यापि स्वीयमेव शार्दूलविक्रीडितमुदाहरण-मुखेनोपस्थापयति-

**रे रे कापुरुषापवादपटवः पथ्यं कटु श्रूयतामित्थं**
**हन्त पलायितुं किमु वयं पत्या प्रतिष्ठापिताः।**
**अप्यन्यत्कपयः प्रियापरिभवप्रक्षालनादुद्धरो**
**रामः क्रूरधनुर्धरो यदि वृथा वैक्लव्यमारभ्यते।।**[२]

अत्र लङ्कायां सङ्गरे कुम्भकर्णस्योद्धतं रौद्रञ्च स्वरूपमवलोक्य पलायमानान् वानरान् प्रतिबोधयतः सुग्रीवस्येयमुक्तिः- रे रे कापुरुषापवादपटवः! कटु पथ्यं श्रूयताम्। हन्त! किमु वयम् इत्थं पलायितुं पत्या प्रतिष्ठापिताः। अप्यन्यत् (हे) कपयः! प्रियापरिभवप्रक्षालनादुद्धुरः क्रूरधनुर्धरो रामो यदि वर्तते तदा वैक्लव्यं वृथा आरभ्यते। अत्र सुग्रीवनिष्ठा रामविषयिणीरतिः भावकोटिमाटीकते।

---

१. का.प्र.वि.पृ.-१५८
२. का.प्र.वि.पृ.-१५९

'रतिर्देववादिविषया व्यभिचारी तथाञ्जितः भावः प्रोक्तः' इत्युक्तं मम्मटेन। अर्थादञ्जितः व्यञ्जितः, न तु वाच्यवाचकभावखलीकृतः व्यभिचारी भावो भवतीति निर्वेदग्लानिशङ्काऽसूयाश्रमालस्यदैन्य-चिन्तामोहव्रीडाजडताविषादावहित्थाव्याधित्रासवितर्कादीनां व्यभिचारिणामेकत्रैव व्यञ्जनया भावत्वमुपगतानामुदाहरणं प्रदर्शयितुमात्मनः शार्दूलविक्रीडितं पद्यमुल्लिखति टीकाकृत्। तथा हि–

**स्वैराटोपसहिष्णु हन्त विजहौ स्वं सल्लकीनां वनं,**
**लेभे डिण्डिमपट्टबन्धललितां लक्ष्मीं न राजाङ्गणे।**
**वातव्याकुलिते जरत्प्रवहणे बद्धो विघूर्णन्मुहुर्मध्ये-**
**वारिधि कुञ्जरेन्द्रकलभः कष्टां दशामश्नुते।।**[१]

इत्यत्र निर्वेदग्लानिशङ्कासूयाश्रमालस्यदैन्यचिन्तामोहव्रीडाजडताविषादावहित्थाव्याधित्रासवितर्कादयो बहवो व्यभिचारिणो व्यज्यन्ते इति व्यञ्जितस्य व्यभिचारिभावस्योदाहरणम्।

चतुर्थे उल्लासे **'पदैकदेशरचनावर्णेष्वपि रसादयः'** इत्यास्याः कारिकायाः व्याख्याने आचार्यो मम्मटः प्रकृतिप्रत्ययोपसर्गनिपातादीनां शृङ्गारव्यञ्जकत्वमुपपाद्य ग्रन्थविस्तरभियोपसंहरति तथा च लिखति–

**'एवमन्येषामपि बोद्धव्यमिति।'**[२]

तत्र प्रकृतिप्रत्ययादीनां द्योतकत्वमुपपादयन् भट्टगोपालस्तत्रोपग्रहस्य, यथा ममैव इति कृत्वैकं स्वीयामनुष्टुपं भावव्यञ्जकतायामुदाहरति–

**अभुञ्जत भुवं प्राञ्चो देव बाहुर्भुनक्ति ते।**
**राजवत्यो यतस्तेषां राजन्वत्यस्तु ते प्रजाः।।**[३]

हे देव! प्राञ्चो भुवम् अभुञ्जत ते बाहुर्भुनुक्ति। यतस्तेषां प्रजाः राजवत्यः, ते प्रजास्तु राजन्वत्यः इति वाक्यार्थः। अत्र भुज्धातुः पालनाऽभ्यवहारयोरर्थयोः धातुपाठे पठितः। स्वरितेत्त्वलक्षण उभयपदी। 'अभुञ्जत' इति लङि आत्मनेपदे रूपं भुनक्तीति तु परस्मैपदे। **भुजोऽनवने** (१.३.६६.) इति सूत्रेण अनवने (उपभोगे) आत्मनेपदं भवति। ओदनं भुंक्ते, बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्, वृद्धो जनो दुःखशतानि भुंक्ते इत्यादिषु भुजेरर्थः उपभोगपरः। अवने (पालनेऽर्थे) तु परस्मैपदं भवति, महीं भुनक्ति इति। प्रकृते च प्राञ्चो भुवम् अभुञ्जत इत्यत्र निन्दा, ते बाहुर्भुनक्ति इत्यत्र स्तुतीत्यर्थो व्यज्यते। एतादृशः प्रयोगस्य निन्दास्तुतिपरं प्रयोजनम्। 'राजवत्यो' मतुपि ङीपि बहुवचने रूपम्, राजा अस्ति आसां प्रजानामिति ताः राजवत्यः। राजन्वत्यस्तु 'राजन्वान् सौराज्ये (८.२.१४)' इति सूत्रेण सौराज्ये गम्यमाने राजन् शब्दान् मतुपि 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः (८-२-९)' इति वत्वे, निपातनान् नलोपाभावे 'उगितश्चे (६-३-४५)' त्यनेन ङीपी राजन्वती पदं सिद्ध्यति। अर्थात् अन्ये राजानो भुवं

१. का.प्र.वि.पृ.-१५९
२. पृ. २२२
३. का.प्र.वि.पृ.-२२३

करादानादभ्यवहरन्ति, वर्णनीयस्तु पालयति। एवं राजवत्योऽन्येषां प्रजाः वर्णनीयस्य तु राजन्वत्य इति। 'सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवानि' त्यमरवचनात् प्रकृते उभाभ्याम् पदाभ्यां भिन्नार्थः द्योत्यते। अत्रैकस्मादेव धातोरर्थभेदेन क्रियाभेदः पदभेदश्च जातः। अतः पद-प्रकृति-प्रत्ययादीनां व्यञ्जकता भवतीति ज्ञेयम्।

चतुर्थे एवोल्लासे ध्वनिविवेचनप्रसङ्गे त्रिरूपेण सङ्करेण, एकरूपया संसृष्ट्या चेति चतुर्भिर्गुणने ध्वनेरानन्त्यं प्रदर्शितम्। तत्र संयोगश्रृङ्गारात्मनि पद्ये सङ्करसंसृष्टिभ्यां मिश्रणे 'खणपाहुणिआ देअर' इति, विप्रलम्भश्रृङ्गारस्य च स्निग्धश्यामलेति द्वे उदाहरणे प्रस्तुते। इदानीं भावध्वनिरपि संकरसंसृष्टिभ्यां व्यज्यते प्रदर्शयितुं स्वीयं शार्दूलविक्रीडितमवतारयति टीकाकारः-

**सौभाग्याय नमस्तवास्तु यदयं त्वत्कल्पमन्यं जनं,**
**धत्ते वक्षसि वल्लभो घटयति भ्रातैव ते कौस्तुभः।**
**इत्यालीपरिहाससंभृतरुषं संलक्ष्य लक्ष्मीं**
**प्रियामाकल्पानवधीरयन्नवतु वो देवः पुराणः पुमान्।।**[१]

सौभाग्याय नमः अस्तु। यदयं तव वल्लभः त्वत्कल्पमन्यजनं वक्षसि धत्ते। कौस्तुभं ते भ्रातैव घटयति। इत्यालीपरिहाससंभृतरुषं प्रियां लक्ष्मीं संलक्ष्य देवः पुराणः पुमान् आकल्पान् अवधीरयन् वः अवत्वित्यन्वयः।

अत्र सौभाग्याय नमः इति वस्तुनोपालम्भो व्यज्यते। यत्र नमः पदस्यौल्वण्यम्। तस्य चानुग्राह्यस्य कौस्तुभो घटयतीति वस्तुव्यंग्येन लक्ष्मीप्रतिबिम्बनध्वनिनानुग्राहकेण सङ्करः। भ्रातैवेतिशब्द-शक्तिसमुद्भवस्य नायिकाहङ्कारभङ्गस्य व्यंग्यस्य प्रतिबिम्बलाभादालीपरिहास इत्यर्थशक्तिसमुत्थितस्य काव्यलिङ्गस्य च पूर्ववत् सङ्करः। क्वचित् संशयविषयतया च पार्यते निर्वोढुम्। सर्वैश्चामीभिर्भावैः भगवद्गोचरायाः कविसम्बन्धिन्याः रतेः सङ्करः। अवधीरयन्नित्यत्र तेषामेव व्यञ्जकतान्तं निमज्जनमिति सिद्धम्।

सप्तमे उल्लासे पद-तदेकदेश-वाक्यगतान् दोषान् विवृण्वन् वाक्यनिष्ठस्य विधेयाविमर्शदोषस्य विषयमुपस्थाप्य काव्यप्रकाशकारो मूले लिखति- यद्यपि यत्तदोर्नित्यसम्बन्धः इति धिया उभयोरेकत्र प्रयोगोऽनिवार्यो भवति तथापि प्रकान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते। एवमेव यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते। यथा 'साधु चन्द्रमसि पुष्करैरित्यस्मिन् (पृ. ३४५)' पद्ये। प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकांक्षः। द्वयोरुपादाने तु निराकांक्षत्वं प्रसिद्धमिति। अत्र चूडामणिकारः महता चातुर्येण एतद् यदुपक्रमं तदुपसंहाररूपं वाक्यं, विपर्ययेणोक्ते व्यत्यासरूपं च वाक्यम् इति द्वयमपि एकत्रैव स्वीकार्ये पद्ये प्रदर्शयति। यथा-

---

१. का.प्र.वि.पृ.-२३०

**ये शिलाशकलशङ्कया रसस्राविणीषु करकासु निस्पृहाः।**
**अर्थिनश्च सलिले त एव ते ये हि विश्वविमुखास्त्वदुन्मुखाः।।**[1]

अत्र 'ये शिलाशकलशङ्कया रसस्राविणीषु करकासु निस्पृहाः ते एव सलिले अर्थिनः (भवन्ति)। ते ये हि विश्वविमुखास्त्वदुन्मुखाः' इत्यत्र ये हि विश्वविमुखाः ते त्वदुन्मुखाः इति यत्तदोर्व्यत्यासे निराकांक्षत्वं सम्पन्नमिति द्वयोः प्रकारयोरेकस्मिन्नेव पद्ये उदाहरणं प्रदर्श्य स्वीयं पाण्डित्यप्रकर्षं महाकवित्वञ्च प्रकाशयति।

सप्तमोल्लास एव वाक्यमात्रगतानां दोषाणां विवेचनप्रसङ्गे अर्धान्तरैकवाचकं दोषं स्पष्टयति टीकाकारः स्वोपज्ञेनानुष्टुपुछन्दसा। अर्धगतमप्रधानहेत्वाद्यर्थकमेकं वाचकं यत्र तदर्धान्तरैकवाचकम् 'नार्धे किञ्चिद्वाक्यं समाप्यमिति' नियमः। तद्द्विविधम्- द्वितीयार्धगतैकवाचकं प्रथमार्धं, प्रथमार्धगतैकवाचकं द्वितीयार्धम्। तत्र प्रथमं द्वितीयार्धगतैकवाचकमुदाहृतं ग्रन्थकर्त्रा 'मसृणचरणपातमित्यादिना। द्वितीयं, प्रथमार्धगतैकवाचकमुदाहरति चूडामणिकारः स्वीयेन पद्येन-

**वक्षःस्थलं मुकुन्दस्य, कौस्तुभाङ्कं कपर्दिनः।**
**चूडालो बालचन्द्रेण जटाजूटश्च पातु वः।।**[2]

मुकुन्दस्य कौस्तुभाङ्कं वक्षःस्थलं, कपर्दिनः बालचन्द्रेण चूडालो जटाजूटश्च वः पातु इत्यन्वयः। अत्र पूर्वार्धगतैकवाचकमुत्तरार्धं जटाजूट इति पदमतोऽर्धान्तरैकवाचकत्वनामको दोषः।

सप्तमे उल्लासे पद-वाक्य-अर्थगतान् दोषान् उद्भाव्य पुनस्तेषु दोषेषु यथासम्भवं गुणीकारोपाधिमभिधातुकामो मम्मटः प्रथममपुष्टार्थतया शङ्कितमदुष्टं समर्थयति- **'कर्णावतंसादिपदे...'** इत्यादिना। तत्र 'अस्याः कर्णावतंसेनेत्यत्र कर्णादिशब्दाः कर्णादिस्थितिं प्रतिपत्तये' इत्यादिकं समाहितं मम्मटमहोदयेन। टीकाकारोऽपि प्रसङ्गेऽस्मिन् स्वीयं पद्यमुदाहरति। इदञ्च चतुर्थे उल्लासे अञ्जितव्यभिचारिणो भावसंबलनप्रसङ्गे (पृ. १५९) पूर्वमुद्धृतमित्यत्र केवलं प्रकृतं विवेच्यते। तथा हि-**'मध्ये वारिधि कुञ्जरेन्द्रकलभः कष्टां दशामश्नुते।'** इत्यत्र करिकलभशब्दस्ताद्रूप्यप्रतिपत्तये मन्तव्यम्। यतो हि कलभस्य कुञ्जरेन्द्रेण ताद्रूप्यमत्यन्तश्लाघ्यत्वनिबन्धनं, तादात्विकी शोच्यता च प्रतिपद्यते। रसनिष्ठदोषनिरूपणप्रसङ्गे ग्रन्थकृद्वर्णयति यत् 'क्रोधं प्रभो संहर संहरेतिवद् भ्रुकुट्यादिविकारवर्जितः सद्यः फलदः क्रोधः दिव्येष्वेव वर्णनीयः। एतदुदाहरणे विमर्शिनीकारोऽपिः स्वीयां स्रग्धरामवतारयति-

**अक्ष्णः कोणेन विद्युत्कणकिरणमुचा पश्यति क्रोधवश्ये,**
**यस्मिन्नम्लानपुष्पस्तिमितमधुलिहो देवदारोरधस्तात्।**
**उन्मीलद्धूमलेखाविलिखितगगनो लब्धवानिक्षुधन्वा,**
**दावज्वालावलीढस्फुटितफलदशां शाल्मलीगुल्मलीलाम्।।**[3]

---

१. का.प्र.वि.पृ.-३४५
२. का.प्र.वि.पृ.-३७२
३. का.प्र.वि.पृ.-४५७

अत्रायं भावः, यस्मिन् क्रोधवश्ये अक्ष्णः विद्युत्कणकिरणमुचा कोणेन पश्यति अम्लानपुष्पस्तिमितमधुलिहो देवदारोः अधस्ताद् उन्मीलद्धूमलेखाविलिखितगगनः इक्षुधन्वा शाल्मलीगुल्मलीलां दावज्वालावलीढस्फुटितफलदशां लब्धवान् इति। अत्र भगवतो माराोः क्रोधाग्निना सद्यो भस्मीभूतस्य कामदेवस्य वर्णनं वर्णनानुगुणम्।

प्रतिकूलविभावादिग्रहं गुणीकर्तुं मम्मटः 'सञ्चायादेर्विरुद्धस्ये' ति कारिकामवतारयति। तस्यायं भावः, प्रकृतविरुद्धं व्यभिचार्यादि बाध्यत्वेनोच्यते तदा दूरे दोषत्वम्, प्रत्युत् प्रकृतरसपरिपोषकतया गुणत्वमेव।' विरोधिनां भावानां बाध्यत्वेनावस्थामङ्गभावप्राप्तिर्वेति द्विविधो गुणीकारः। उक्तञ्च ध्वनिकारेण–

**विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।**
**बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला।।**[१]

तत्र प्रथमं बाध्यत्वेनोक्तिरित्युदाहृतं स्वयमेव मम्मटेन–'क्वकार्यं शशलक्ष्मण' इत्यादिना। द्वितीयमङ्गभावं प्राप्तानामित्यस्योदाहरणं टीककारः स्वीयेनानुष्टुब्वृत्तेन ददाति'–

**कर्दमादपि यत् कार्ष्ण्यं कज्जलस्य विशिष्यते।**
**गुणमेव हि तत्तस्य चक्षुष्मन्तः प्रचक्षते।।**[२]

अष्टमे उल्लासे माधुर्यगुणं व्याख्याय ओजोगुणस्य वर्णने चूडामणिकारेण स्वोपज्ञं पद्यमुदाह्रियते। यथा–

**खलजिह्वावलीढस्य काव्यस्य श्रवणार्हता।**
**श्वदंष्ट्रया विमृष्टस्य कुणपस्येव कल्पते।।**[३]

खलजिह्वावलीढस्य काव्यस्य श्रवणार्हता श्वदंष्ट्रया विमृष्टस्य कुणपस्येव कल्पते इत्यर्थः। एतेन शुद्धमोजो व्याख्याताम्। अष्टमे उल्लासे मम्मटभट्टः गुणगणनावसरे प्रथमं वामनोक्तान् दश शब्दगुणान् आलोच्यार्थगुणालोचनप्रसङ्गे कथयति यत्, प्रौढिः पञ्चविधा भवति– (१) पदार्थे वाक्यरचनम् (२) वाक्यार्थे पदाभिधा (३) व्यासः (४) समासः (५) अस्य अर्थस्य साभिप्रायत्वकथनरूपा च। उक्तञ्च–

**पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।**
**प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च।।**[४]

तत्र पदार्थे वाक्यरचनमित्यस्योदाहरणं यथा ममैव इति कृत्वा ददाति टीकाकारो गोपालभट्टः–

---

१. ध्वन्या.-३-२०
२. का.प्र.वि.पृ.-४६१
३. का.प्र.वि.पृ.-४९०
४. का.प्र.वि.पृ.-४९१

**लोचनेनैव जानन्ति लोके ये केचन ध्वनिम्।**
**भुजङ्गा एव ते किन्तु वमन्त्यमृतमाननैः।।**[१]

अर्थात् लोके ये केचन ध्वनिं लोचनेनैव जानन्ति ते भुजङ्गा एव, किन्तु आननैः अमृतं वमन्ति इत्यन्वयः।

अत्र चक्षुःश्रवसो लक्षणे पदार्थे पूर्वार्धाकारं वाक्यं रचितम्। वाक्यार्थे पदाभिधा इत्यस्य च– 'कि ते गण्डे कितवे' त्याद्युदाहरणम् (द्र० भावध्वनेरुदाहरणप्रसङ्गे)। अत्र कपोलस्थले मम लग्नचन्द्रलेखामुद्राङ्कस्त्वां नखक्षतशङ्कया क्षोभयतीति वाक्यार्थेऽऽज्ञातमिति पदमभिहितम्। इत्थं धारणस्योपरि न तत्परिज्ञानमपीत्यहो ते धाष्ट्यातिशयः इति वाक्यार्थे आः किमिति पदमभिहितम्। व्यासो यथा स्वीयेनैव शार्दूलविक्रीडितेन–

**बीजस्यार्पणमालबालघटना कुल्याम्भसो योजनं**
**रक्षा कण्टकशाखयेति सकलस्तुल्यः क्रियासंग्रहः।**
**दुर्लङ्घो विषमः स्वभावमहिमा पत्रप्रकाण्डोदयो**
**माधुर्ये विपरीतमिक्षुरभवन्निम्बश्च निम्बः स्वयम्।।**[२]

अत्र स्वभावस्य दृष्टान्तपूर्वकं व्याख्यानं कृतमिति व्यासः। अस्यैव समासो यथाऽनुष्टुब्वृत्तेन उदाहरति–

**एकस्मादेव सरसो वृक्षाणामम्बुसारणी।**
**स रसो विषमः कस्मादुभयोरिक्षुनिम्बयोः।।**[३]

अत्रायं भावः। रचनायां क्वचित् संक्षिप्तस्य समासेन कथनं भवति, क्वचिच्च व्यासेन। अत्र 'एकस्मादेव सरसो' इत्यनुष्टुब्वृत्ते यद्वस्तु समासेनोक्तं तदेव बीजस्यार्पणमालवालघटनेत्यादिना पद्येनोत्यते। इदं व्यासेन कथनमित्यस्योदाहरणमवधेयम्। एवमस्मिन्नेव प्रसङ्गे अन्यान्यपि पद्यानि उद्धरणविवरणशून्यानि, भाषादृष्ट्या टीकाकर्तुः पद्यैः साम्यत्वमुपगतानि सन्ति, तथापीह नाकलितानि। जिज्ञासुभिः टीकायामेव– ४९३–४९५ पृष्ठे द्रष्टव्यानि।

नवमे उल्लासे श्लेषालङ्कारवर्णनप्रस्तावे ग्रन्थकारो मम्मटः श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरं भवतीत्यादिरूपम् अलङ्कारसर्वस्वकारस्य मतं व्याकुर्वन् 'आदाय चापमचलमि' त्यादिषु पद्येषु विरोधादिकमलङ्कारमेवाङ्गीकरोति प्राधान्येन, न श्लेषत्वम्। प्रसङ्गेऽस्मिन् टीकाकारोऽपि 'यथा ममैव' इत्यादिनिर्देशेन श्लेषसंवलितेऽपि वाक्ये प्रधानीभूता–पह्नुत्यलङ्कारस्योदाहरणं प्रस्तौति अनुष्टुप्च्छन्दसा–

**कालोऽयं हीनपुन्नागः केसरी वर्तते वने।**
**प्रकाशन्ते नखाः यस्य पलाशमुकुलच्छलात्।।**[४]

१. का.प्र.वि.पृ.–४९१
२. का.प्र.वि.पृ.–४९२
३. का.प्र.वि.पृ.–४९३
४. का.प्र.वि.पृ.–५३२

अर्थात् वने हीनपुन्नागः केसरी कालोऽयं वर्तते, पलाशमुकुलच्छलाद् नखाः प्रकाशन्ते इति। अत्र 'हीनपुन्नागः, कालः' इत्यादयः शब्दाः श्लिष्टाः। दशमे उल्लासे विभावनालङ्कारप्रसङ्गे श्रीभट्टगोपालः स्वीयं पद्यमुदाहरति तथा हि–

**अकुङ्कुमालेपकामनिद्रमनासवास्वाद-मरोषलीलम्।**
**सन्ध्यामयूखैः क्षणमङ्गनानां रागोऽयमारोहति गण्डरेखाम्।।**[१]

अर्थादयं रागः अकुङ्कुमालेपम्, अकामनिद्रम् अनासवास्वादम् अरोषलीलम् क्षणं सन्ध्यामयूखैः अङ्गनानां गण्डरेखाम् अधिरोहति इति सम्बन्धः। अत्र गण्डरेखायां रागाधिरोहि कुङ्कुमलेपनादि कारणं निवर्त्यते, उच्यते च सन्ध्यामयूखलक्षणमिति संक्षेपः। मम्मटेन च 'कुसुमितलताभिरहते' त्याद्युदाहृतम्। अत्र मदस्य प्रसिद्धं यदासवाख्यं करणं तदभावेऽपि यौवनं हेतुत्वेनोपनिबद्धं, मदस्य द्वैविध्येऽप्यभेदाध्यवसायादेकत्वम्।

एवं काव्यप्रकाशविमर्शिन्यामुदाहरणप्रसङ्गे समागतानि टीकाकर्तुः स्वोपज्ञानि पद्यानि मया संक्षेपेण निर्दिष्टानीत्यलम्।

---

१. का.प्र.वि.पृ.–६१८

# वैदिक शिक्षा : एक परिदृश्य

**डॉ. कृष्णचन्द्र त्रिपाठी**

बहुत प्राचीन एवं पुनीत शब्द है 'शिक्षा'। मानव जीवन से इसका अभिन्न सम्बन्ध है। 'शिक्षा' शब्द का प्रचलन कब से हुआ? इस सन्दर्भ में माना जा सकता है कि संसार में मानव के अस्तित्व में आने के साथ ही शिक्षा शब्द का समाज में प्रचलन हुआ होगा। हालाकि उस समय इसका क्या रूप रहा होगा या फिर कितना महत्त्व रहा होगा? यह कहना कठिन है किन्तु आज 'शिक्षा' शब्द जन-जन में समाया हुआ है। यहाँ तक कि पशु और पक्षियों की 'शिक्षा' की बात भी की जा रही है।

'शिक्षा' एक साधना है, एक तपस्या है जिसे लगन-निरन्तरता एवं दूसरी ओर परिश्रम से तथा बड़ी कठिनाई से प्राप्त किया जाता है। हालाँकि 'शिक्षा' के साधक को इसकी साधना में उतना ही आनन्द आता है, जितना किसी हठयोगी को अपनी हठ-योग की साधना में या फिर सोऽहं की साधना के महान साधक को एक ओर कहा गया है कि ऋते ज्ञानान्न मुक्तिः अर्थात् ज्ञान बिना मुक्ति नहीं है तथा विद्ययाऽमृतमश्नुते अर्थात् विद्या से अमृत को पाया जाता है। वही भारतीय अध्यात्म की एक शाखा संसार को नश्वर मानती है। उनकी यह बात तार्किक भी लगती है। अर्थात् जब संसार का परिणाम नष्ट होना है यानि किसी वस्तु या व्यक्ति का अन्तिम फल उस व्यक्ति या वस्तु का विनाश ही है तो नश्वर जगत् में शिक्षा की आवश्यकता क्यों? अरे! शिक्षा पाना अथवा शिक्षित होना कोई साधारण कार्य तो है नहीं।

'शिक्षा' के विचार क्रम में सृष्टि के आरम्भ को झांकना होगा जिससे शिक्षा और मानव जीवन की कड़ी को ठीक ढंग से जोड़ा जा सके। सृष्टि के आरम्भ को कैसे जानें? यह दृश्यमान् जगत् कब से हुआ? इसकी शुरुआत कहाँ हुई? इस जगत् का प्रथमतया आकार क्या था? इन सब प्रश्नों की मूल भावना के समाधान की दिशा में ऋग्वेद के नासदीय सूक्त के वक्ष्यमाण मंत्रों को रखा जा सकता है।

**नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत्।**
**किमा किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्।।**[१]

अर्थात् उस समय [प्रलय दशा में] असत् [जिसका अस्तित्व नहीं है] नहीं था। सत्

---

१. ऋ.१०.१२१

[जीवात्मा आदि] भी नहीं था। पृथिवी भी नहीं थी, आकाश भी नहीं था, आकाश में विद्यमान सप्तभुवनादि भी नहीं थे। आवरण [ब्रह्माण्ड] भी कहाँ था? किसका कहाँ स्थान था? क्या दुर्गम और गम्भीर जल उस समय था? नहीं पर पुनः कहा गया है–

**न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।**
**आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास।।**[१]

अर्थात् उस समय मृत्यु नहीं थी, अमरता भी नहीं थी, रात और दिन का भेद भी नहीं था। वायु-शून्य और आत्मावलम्बन से श्वास-प्रश्वासयुक्त केवल एक ब्रह्म थे। उनके अतिरिक्त और कुछ नहीं था।

**तम आसीत् तमसा गूळहमग्रे ऽप्रकेतं सलिलं सर्वमा इदम्।**
**तुच्छ्येनाम्वपिहितं यदासीत् तपसस्तन्महिना जायतैकम्।।**[२]

अर्थात् सृष्टि से पूर्व अन्धकार से अन्धकार ढका हुआ था। सभी अज्ञात और सब जलमय [वा अविभक्त] था। अविद्यमान वस्तु के द्वारा वह सर्वव्यापी आच्छन्न था। तपस्या के प्रभाव से वही एक तत्त्व उत्पन्न हुआ।

यह सृष्टि किस उपादान कारण से हुई? किस निमित्त कारण से ये विविध सृष्टियाँ हुई? देवता लोग इन सृष्टियों के अनन्तर उत्पन्न हुए हैं। कहाँ से सृष्टि हुई, यह कौन जानता है? ये नाना सृष्टियाँ कहाँ से हुई, यह कौन जानता है? किसने सृष्टियाँ की और किसने नहीं कीं– यह सब वे ही जाने, जो इनके स्वामी परमधाम में रहते हैं। हो सकता है कि वे भी यह सब न जानते हों। अर्थात् सृष्टि की पूर्वावस्था पर नेति-नेति अर्थात् ऐसा नहीं, ऐसा नहीं यह नहीं वो नहीं, यहाँ नहीं वहाँ नहीं आदि आदि के माध्यम से निर्धारित करते हुए 'हिरण्यगर्भ' के सन्दर्भ में वैदिक ऋषि कहते हैं–कि सबसे पहले केवल परमात्मा या हिरण्यगर्भ हुये। उत्पन्न होने पर वे 'हिरण्यगर्भ' ही सारे प्राणियों के अद्वितीय अधीश्वर हुये। उन्होंने ही इस पृथ्वी और आकाश को अपने अपने स्थानों में स्थापित किया। उन 'क' नाम वाले प्रजापति देवता की हम पूजा करेंगे अथवा हम हवन से द्वारा किन देवता की पूजा करें? वहीं कहा गया है–

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवी द्यामुतेमा कस्मै देवाय हविषा विधेम।।**[३]

**य आत्मदा बलदा यस्य विश्व उपासते प्रशिष यस्य देवा।**
**यस्य छायामृतं यस्य मृत्यु कस्मै देवाय हविषा विधेम।।**[४]

---

१. ऋ. १०.१२०.२
२. ऋ. १०.१२०.३
३. हिरण्यगर्भसूक्ते
४. ऋ. १०.१२१.१

जिस प्रजापति ने जीवात्मा को उपजाया है, बल दिया है, जिनकी आज्ञा सारे देवता मानते हैं, जिनकी छाया अमृत रूपिणी है तथा जिनके वश में मृत्यु है।

**य प्राणतो निमिषतो महित्वै क इद्राजा जगतो बभूव।**
**य ईशे अस्य द्विपदश्चतुष्पद कस्मै देवाय हविषा विधेम।।**[१]

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।**
**यस्येमाः प्रदिशो महित्वा यस्य बाहू कस्मै देवाय हविषा विधेम।।**[२]

**येन द्यौरुग्रा पृथिवी च हळहा येन स्वः स्तमितं येन नाकः।**
**यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम।।**[३]

जो अपनी महिमा से दर्शनेन्द्रिय और गति शक्तिवाले जीवों के अद्वितीय राजा हुए हैं तथा जो इन द्विपदों और चतुष्पदों के प्रभु हैं, जिनकी महिमा से समस्त हिमाच्छन्न पर्वत हुए हैं, यह ससागरा धरित्री जिनकी सृष्टि कही जाती है तथा सारी दिशाएँ जिनकी भुजाएँ हैं, जिन्होंने इस उन्नत आकाश और पृथिवी को अपने अपने स्थानों पर दृढ़ रूप से स्थापित किया है, जिन्होंने स्वर्ग और आदित्य को रोक रखा है और जो अन्तरिक्ष में जल के निर्माता हैं, जिनके द्वारा द्यौ और पृथिवी, शब्दायमान होकर स्तम्भित और उल्लसित हुए और दीप्तिशील द्यौ और पृथिवी ने जिन्हें महिमान्वित समझा था तथा जिनके आश्रय से सूर्य उगते और प्रकाश करते हैं। जो पृथिवी के जन्मदाता हैं, जिनकी धारण क्षमता सत्य है, जिन्होंने आकाश को जन्म दिया और जिन्होंने आनन्दवर्धक तथा प्रचुर परिमाण में जल उत्पन्न किया। प्रजापति के अतिरिक्त और कोई इन समस्त उत्पन्न वस्तुओं को अधीन करके नहीं रख सकता।[४]

इसी क्रम में वैदिक ऋषि विराट् पुरुष की परिकल्पना प्रस्तुत करते हैं–[५]

विराट् पुरुष सहस्त्र [अनन्त] शिरों, अनन्त चक्षुओं और अनन्त चरणों वाले हैं। वे भूमि [ब्रह्माण्ड-गोलक] को चारों ओर से व्याप्त होकर अवस्थित हैं।[४] जो कुछ हुआ है और जो कुछ होने वाला है, वह सब विराट पुरुष ही है।[५] वे देवत्व के स्वामी हैं: क्योंकि प्राणियों के भोग्य के निमित्त अपनी कारणावस्था को छोड़कर जगदावस्था को प्राप्त करते हैं। यह सकल ब्रह्माण्ड उनकी महिमा है– वे तो स्वयं अपनी महिमा से भी बड़े हैं। इन पुरुष का एक पाद [अंश] ही यह ब्रह्माण्ड है– इनके अविनाशी तीन पाद तो दिव्य लोक में हैं। तीन पादों वाले पुरुष ऊपर उठे और उनका एक पाद यहाँ रहा। अनन्तर वे भोजन-सहित और भोजन-रहित [चेतन और अवचेतन] वस्तुओं में विविध रूपों में व्याप्त हुए। उन आदि पुरुष से विराट् [ब्रह्माण्ड-देह] उत्पन्न हुआ और

१. ऋ. १०.१२१.४
२. ऋ. १०.१२१.५
३. ऋ. १०.१२१.५
४. सहस्रशीर्षा, ऋ.१०.९०.१
५. ऋ. १०.९०.२

ब्रह्माण्ड देह का आश्रय करके जीव-रूप से पुरुष उत्पन्न हुए। उन्होंने भूमि बनाई और जीवों के शरीर [पुरः] बनाये, जिस समय पुरुष-रूप मानस हवि से देवों ने मानसिक यज्ञ किया, उस समय यज्ञ में बसन्त-रूप घृत हुआ, ग्रीष्म-स्वरूप काष्ठ हुआ और शरद् हव्य-रूप से कल्पित हुआ। जो सबसे प्रथम उत्पन्न हुए, उन्हीं [यज्ञ साधक पुरुष] को यज्ञीय पशु-रूप से मानस यज्ञ में दिया गया। उन पुरुष के द्वारा देवों, साध्यों [प्रजापति आदि] और ऋषियों ने यज्ञ किया। जिस यज्ञ में सर्वात्मक पुरुष का हवन होता है, उस मानस यज्ञ से दधि-मिश्रित-घृत आदि उत्पन्न हुए। उससे वायु देवतावाले वन्य [हरिण आदि] और ग्राम्य [कुक्कुर आदि] पशु उत्पन्न हुए। सर्वात्मक पुरुष के होम से युक्त उस यज्ञ से ऋक् और साम उत्पन्न हुए। उससे गायत्री आदि छन्द उत्पन्न हुए और उसी से यजुः की भी उत्पत्ति हुई। उस यज्ञ से अश्व और अन्य नीचे-ऊपर दाँतों वाले पशु उत्पन्न हुए। गौ, अज और मेष उत्पन्न हुए।

अब प्रश्न उठता है कि जो विराट् पुरुष उत्पन्न किए गए, वे कितने प्रकारों से उत्पन्न किये गए? इनके मुख; दो हाथ, दो उरु और दो चरण कौन हुए? उत्तर में बताया गया कि इनका मुख ब्राह्मण [ब्रह्मज्ञानी] हुआ, दोनों बाहुओं से क्षत्रिय बनाया गया। दोनों उरुओं [जघनों] से वैश्य हुआ और पैरों से शूद्र उत्पन्न हुआ। पुरुष के मन से चन्द्रमा, नेत्र से सूर्य, मुख से इन्द्र और अग्नि तथा प्राण से वायु उत्पन्न हुए। पुरुष की नाभि से अन्तरिक्ष, शिर से द्यौ [स्वर्ग], चरणों से भूमि, श्रोत्र से दिशाये आदि भुवन बनाये गए। प्रजापति के प्राणादि-रूप देवों ने मानसिक यज्ञ के सम्पादन-काल में जिस समय पुरुष-रूप पशु को बाँधा, उस समय सात परिधियाँ [ऐच्छिक और आह्वनीय की तीन और उत्तर वेदी की तीन वेदियाँ तथा एक आदित्य-वेदी आदि सात परिधियाँ व सात छन्द] बनाई गईं और इक्कीस [बारह मास, पाँच ऋतुएँ, तीन लोक और आदित्य] यज्ञीय काष्ठ व समिधायें बनाई गईं। देवों ने यज्ञ [मानसिक संकल्प] के द्वारा जो यज्ञ किया, या पुरुष का पूजन किया, उससे जगत्-रूप विकारों के धारक और मुख्य धर्म हुए। इस प्रकार 'नेति' 'नेति' करते हुए वैदिक ऋषियों ने समस्त सृष्टि की अवधारणा की।

अब विचारणीय है कि विराट्मय सृष्टि में 'शिक्षा' की आवश्यकता क्योंकर अनुभव की गई?

### शिक्षा की आवश्यकता–

"समर्थ होना" के लिए शक् धातु का प्रयोग होता है। आग्ल-भाषा में एतदर्थ 'CAN' का प्रयोग होता है। इसी शक् का सन्नन्त रूप "शिक्ष्" है। इसमें आङ् पूर्वक टाप् प्रत्यय लगाने से "शिक्षा" पद निष्पन्न होता है। शिक्ष्+"गुरोश्च हल" इत्य ततष्टाप्। यह धातु सीखने सिखाने के अर्थ में प्रयुक्त होती है। शिक्ष् भाव अ+टाप्। अधिगम, अध्ययन-ज्ञानाभिग्रहण-रघु॰ ७/६३, किसी कार्य को करने के योग्य होने की इच्छा निष्णात होने की इच्छा, अध्यापन-शिक्षण-प्रशिक्षण-काव्यज्ञशिक्षयाभ्यासः (काव्य प्र॰ १), अमूच्य नम्रः प्रणिपात शिक्षया (रघु.३/२५) मालवि. ४/९, रणशिक्षा-युद्ध विज्ञान"। ऋग्वेद ३/१९/३ में आचार्य सायण ने "शिक्षते दानकर्मणः अभिमतफलप्रदाने

शक्तुं शिक्षो:" किया है एवं इसकी निष्पत्ति शक्लृ धातु का सन्नन्त रूप शिक्ष् ही माना है एवं "शिक्षविद्योपादानेऽत्र दानार्थ:" अर्थ किया है। आचार्य सायण और वेंकटमाधव ने "शिक्षा" शब्द को "शिक्षते दानकर्मा" से निष्पन्न माना है। इसका अर्थ निघण्टु ३-२० एवं १-७ में भी द्रष्टव्य है।[१]

वेद में शिक्षा शब्द से सम्बन्धित अनेक शब्द प्राप्त होते हैं उदाहरणार्थ– शिक्षते, शिक्षति, शिक्षसि, शिक्षत्, शिक्षात्, शिक्षा, शिक्षमाण, शिक्षानर इत्यादि।

ऋग्वेद १-५३-२ में इन्द्र को शिक्षानर कहा गया है, जिसका अर्थ कोष में "सहारा देने वाला" किया गया है। इसी तरह ऋ. ८-५२-८ में इन्द्र की शिक्षक के रूप में स्तुति की गई है। ऋग्वेद में 'शिक्षा' शब्द से सम्बन्धित जो भी शब्द प्रयुक्त हुये हैं, उनका अर्थ प्राय: दानशीलता के साथ जोड़ा गया है चाहे वह इन्द्र के विषय में हो अथवा किसी अन्य देवता के विषय में। यहाँ यह कहना सर्वथा समीचीन होगा कि "शिक्षा" सम्बन्धित कर्म को ऋग्वेदकाल में अत्यन्त पुनीत माना जाता था। ऋग्वेद में इन्द्र के विषय में कहा गया है–

**नूनं सा ते प्रतिवरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।**
**शिक्षास्तोतृभ्यो मातिधग्भगो बृहद्बदेम विदथे सुवीराः।।**[२]

सायण भाष्य में इसका अर्थ इस प्रकार किया गया है–

हे इन्द्र! या दक्षिणा। दक्षमुत्साहनं करोतीति दक्षिणा। स्तोतृभ्यो देया। ते त्वत्सम्बन्धिनी मघोनी धनवती जरित्रे स्तोत्रे वरं श्रेष्ठमभिमतमर्थं नूनं प्रति दुहीयत् इदानीं प्रतिदोग्धि संपादयतीत्यर्थ:। तादृशी दक्षिणां स्तोतृभ्य अस्मभ्यं शिक्ष प्रयच्छ। सायण भाष्य ऋ. २-११-२१। इस मंत्र में प्रयुक्त दक्षिणा का अर्थ वेङ्कटमाधव, विल्सन और गोल्डनर ने दक्षिणा ही माना है। इन विद्वानों ने शिक्षा का अर्थ प्रदान करने से लिया है। ऋग्वेद ३-१९-३ पर सायण ने "शिक्षा" शब्द का अर्थ शोभनापत्योपेतं धनं शिक्ष प्रयच्छ" किया है। यहाँ 'शिक्ष' शब्द का अर्थ प्रदान करना या देना किया गया है। जीवन के लिए उपयोगी तमाम आदर्श भी शिक्षा कहे जाते हैं। गुरुओं, माता पिता तथा अन्य बड़ों से प्राप्त होने वाले व्यावहारिक ज्ञान को भी शिक्षा कहते हैं। शिक्षा की आवश्यकता क्यों? उत्तर में श्रुति वचन है कि "ऋते ज्ञानान्न मुक्ति:" अर्थात् ज्ञान के बिना मुक्ति नहीं होती और ज्ञान बिना शिक्षा के सम्भव नहीं है। इस पर यदि यह दलील दी जाय कि "हमें मुक्ति नहीं चाहिए। हम सांसारिक हैं, मुक्ति पर विश्वास नहीं करते। तब यह कहा जा सकता है कि 'उत्तम सांसारिक जीवन' व्यतीत करने के लिए भी शिक्षा की आवश्यकता है। ऋषि इन्द्र से प्रार्थना करता है कि

---

१. माधवीया धातुवृत्ति सायणाचार्यकृत, प्राच्यभारती प्रकाशन, कामाच्छा
संस्कृत हिन्दी कोश - वी.एस. आप्टे
ऋग्वेद ३-१९-३ पर सायण भाष्य
ऋग्वेद ३-४३-५ पर सायण और वेंकटमाधव का भाष्य

२. ऋ. २-११-२१

हमें लोकोन्नति प्रदान करो तथा मुक्ति भी प्रदान करो अर्थात् लोकोन्नति से सम्बद्ध शिक्षा प्रदान करो और ज्योतिविषयक [मुक्तिविषयक] शिक्षा दो।

लोकोन्नति विषयिणी शिक्षा की हमें आवश्यकता है। शिक्षा बिना व्यक्ति का जीवन प्रतीत होता है। शिक्षा-रहित व्यक्ति आँख से देखता हुआ भी अन्धा है, कान से सुनता हुआ भी बहरा है, पैर से चलता हुआ भी लंगड़ा है, और हाथों का उपयोग करता हुआ भी से लूला कहा जा सकता है। शिक्षा से रहित व्यक्ति उस घसिहारन घास काटने वाली के सदृश है जो तालाब के किनारे 'हीरे' को पत्थर ही समझकर उससे अपने पैरों की गन्दगी को साफ कर उसको [हीरे को] वहीं पर फेंककर चली आयी। शिक्षा के बिना व्यक्ति शिक्षित समाज में उसी प्रकार लगता है जैसे राजहंसों के बीच में बगुला। [क] कहा गया है कि–

**रूपयौवनसम्पन्ना विशालकुलसंभवाः।**
**विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः।।**

अर्थात् सुन्दर रूप तथा युवावस्था से युक्त तथा उत्तम कुलोत्पन्न होने के कारण कमनीय दिखाई पड़ता हुआ भी व्यक्ति किन्तु विद्या से हीन होने के कारण ठीक उसी प्रकार शोभित नहीं होता जिस प्रकार सुगन्ध रहित ढाक का पुष्प। अतः लोक के सुन्दरतम भोग के लिए शिक्षा का होना अनिवार्य है। अपवर्ग की प्राप्ति के लिए भी अपवर्गीय [ज्योतिविषयिणी तत्त्वमसि, अहं ब्रह्मास्मि] ज्ञान की आवश्यकता है।[१]

प्राचीन भारतीय शिक्षा-पद्धति का मुख्य स्तम्भ शिक्षक होता था, जिसे आचार्य गुरु या उपाध्याय कहा जाता था। अध्यापन अथवा अध्ययन मौखिक होता था। ऋग्वेद ७.१०३.५ में आया है कि पढ़ने वाला गुरु की बाते ठीक उसी प्रकार दुहराता है जिस प्रकार एक मेढक की आवाज को सुनकर दूसरे मेढ़क उसे दुहराते हैं।[२]

इस विषय में अथर्ववेद ११.७.१, गोपथ ब्राह्मण २.१, अथर्ववेद ११.७.३, आपस्तम्ब धर्मसूत्र। ११.१६-१८, शतपथ ब्राह्मण ११.५.४.१२, अथर्ववेद ११.७.६ तथा शतपथ ब्राह्मण ११.५४. १-१७ मननीय हैं। यहाँ पर यह कहना समीचीन होगा कि कुछ न कुछ अपने घर से सीख लेने के पश्चात् ही विद्यार्थीगण 'आश्रम' में विद्याध्ययन के लिए भेजे जाते थे।

पुत्र आरम्भ में ही पिता [माता-पिता] से कुछ शिक्षा प्राप्त किए होता था, जैसा कि

---

१. ऋग्वेद का मंत्र प्रस्तुत है–
इन्द्रं क्रतुं न आ भर पिता पुत्रेभ्यो यथा।
शिक्षाणोऽस्मिन् पुरहूत यामनि जीवाज्योतिरशीमहि।।

२. यदेषामन्योमन्यस्य वाचं शक्तस्वेव वदति शिक्षमाणः।
सर्वं तदेषां समृधेव पर्व यत् सुवाचा वदचनाध्यप्सु।।
संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।
वाचं पर्जन्य जिन्वितां प्रमण्डुका अवदिषु।।

वृहदारण्यक उपनिषद् ५.२.१ के श्वेतकेतु आरुणेय की गाथा से ज्ञात होता है। आरुणेय को सब कुछ ज्ञात था, तथापि बच्चों को आचार्य के पास भेजा जाता था। छान्दोग्योपनिषद् [६.१] में आया है कि श्वेतकेतु आरुणेय को उसके पिता ने १२ वर्षों तक गुरु के पास रखा था।

गुरु की स्थिति अत्यन्त महत्त्वपूर्ण थी। सम्पूर्ण अध्यापन मौखिक था और विद्यार्थी को गुरु के पास ही रहना पड़ता था। सत्यकाम जाबाल अपने गुरु से कहता है–"आपके समान अन्य गुरुजनों से मैंने सुना है कि गुरु से प्राप्त किया हुआ ज्ञान महान होता है।" श्वेताश्वतरोपनिषद् ६. २३ ने गुरु को ईश्वर के पद पर रखा है।

आपस्तम्ब धर्मसूत्र १.२.६.१३ लिखता है कि "शिष्य को चाहिए कि वह गुरु को भगवान की भाँति माने।" मनु २.१४६ तथा विष्णु धर्मसूत्र ३०.४४ के अनुसार जनक औ गुरु दोनों पिता हैं किन्तु जनक [आचार्य] जो पूत वेद का ज्ञान देता है, उस जनक [पिता] से महत्तर है, जो केवल शारीरिक जन्म देता है क्योंकि अध्यात्म में जो जन्म होता है वह ब्राह्मण के लिए इहलोक तथा परलोक दोनों में अक्षुण्ण तथा अक्षय्य होता है। यहीं पर मनु ने [२.१४५] एक स्थान पर आचार्य को उपाध्याय से दस गुना, पिता को आचार्य से सौ गुना तथा माता को पिता से सहस्त्रगुनी [सहस्त्रगुणी] उत्तम माना है। गौतम १.१०-११, वशिष्ठधर्मसूत्र ३.२१, मनु. २.१४० तथा याज्ञवल्क्य १.३४ ने लिखा है कि जो ब्रह्मचारी का उपनयन करता है और उसे सम्पूर्ण वेद पढ़ाता है, वही **'आचार्य'** है। निरुक्त [१.४] लिखता है "आचार्य विद्यार्थी को सम्यक् आचार समझने को प्रेरित करता है।" आपस्तम्बधर्मसूत्र १.१.१.१४ के अनुसार विद्यार्थी आचार्य से अपने कर्त्तव्य [आचार] एकत्र करता है; इसी कारण अनुकरण करने योग्य विद्वान ही आचार्य कहलाते थे।" मनु २.६९ के अनुसार आचार्य उपनयन करने के उपरान्त शिष्य को शौच [शारीरिक शुद्धता], आचार अग्नि में समिधा डालने एवं सन्ध्या-पूजन के नियम सिखाता है। याज्ञवल्क्य १.३४ के अनुसार गुरु वही है जो संस्कार करता है और वेद पढ़ाता है। विष्णुधर्मसूत्र ३२.१-२ में आया है कि पिता, माता एवं आचार्य तीनों गुरु की श्रेणी में आते हैं। मनु २.१४९ के अनुसार ज्ञान देने वाला [कम ज्ञान देने वाले तथा अधिक ज्ञान देने वाले दोनों] गुरु कहा जाता है।

इस सन्दर्भ में आपस्तम्ब-धर्मसूत्र कुछ विशेष ही उल्लेख प्रस्तुत करता है। वहाँ ११.१.११ में आया है कि–

जो अविद्वान् से उपनयन कराता है वह अन्धकार से अन्धकार में ही जाता है।

"साथ ही साथ उपनयन कराने वाला अविद्वान् आचार्य भी अन्धकार में ही प्रवेश करता है।" वहीं १.११.१२-१३ के अनुसार वंशपरम्परा से विद्यासम्पन्न एवं गम्भीर व्यक्ति से ही उपनयन संस्कार कराने तथा वेदाध्यापन कराने की आवश्यकता एवं अपरिहार्यता का उल्लेख मिलता है। तदनुसार जब तक 'आचार्य' धर्ममार्ग से च्युत नहीं होता तब तक उससे पढ़ते रहना चाहिए। अथवा अध्ययन कर चुकने के पश्चात् शिष्य को गुरु के पैर छूने चाहिए और कहना चाहिए–"महोदय! अब हमने समाप्त कर लिया" यह कहकर चला जाना चाहिए किन्तु अन्य विद्वानों के मतानुसार गुरु को "जाओ" "अब हम समाप्त करें" ऐसा कहना चाहिए।

द्विजातियों का प्रथम कर्तव्य वेदाध्ययन था। तैत्तिरीय ब्राह्मण ३.१०-११ के काल में वैदिक साहित्य बहुत विशाल था जैसा कि इन्द्र और भारद्वाज के आख्यान से ज्ञात होता है। भारद्वाज ७५ वर्ष की अवस्था तक ब्रह्मचारी थे तब पर भी इन्द्र ने कहा, "इतना पढ़ लेने पर भी अथाह वेद का बहुत थोड़ा भाग ही तुमने [तीन मुट्ठियों मात्र ही] पढ़ा है।"

गुरुओं का निवास प्रायः एक स्थान पर निश्चित रूप से होता था, किन्तु वे एक स्थान [प्रदेश] से दूसरे स्थान [देश] में जाते हुए पाए गए हैं। कौषीतकि ब्राह्मणोपनिषद् के अनुसार [४. १] मौखिक शिक्षण परम्परा में सर्वप्रथम प्रणव, व्याहृतियाँ एवं गायत्री पढ़ाई जाती थीं। इसके पश्चात् ही बच्चे को वेद के अन्य भाग पढ़ाये जाते थे। शांखायन गृह्यसूत्र ४.८ लिखता है "गुरु पूर्व या उत्तर मुख बैठता है, शिष्य उसके दाहिने उत्तराभिमुख बैठता है, यदि दो या दो से अधिक शिष्य हों तो सुविधानुसार बैठते हैं। शिष्य को गुरु से उच्चासन पर नहीं बैठना चाहिए। बैठने की स्थिति में किसी वस्तु का सहारा भी नहीं लेना चाहिए न ही गुरु के आसन पर कभी बैठना चाहिए। उस अवस्था में शिष्य को अपने पैर भी नहीं फैलाने चाहिए। शिष्य को अपनी भुजाओं से घुटनों को पकड़कर भी नहीं बैठना चाहिए। उसे अपने पैरों को गोदी में भी नहीं लेना चाहिए और न ही उसे कुल्हाड़ी की भाँति पकड़ना चाहिए। जब शिष्य "उच्चारण कीजिए महोदय" कहता है तब आचार्य उससे '**ॐ**' कहलवाता है और शिष्य को 'ओम्' कहना चाहिए। इसके पश्चात् शिष्य द्वारा निरन्तर अध्ययन का अभ्यास किया जाता था। अभ्यास में हम सुविख्यात बालाकि गार्ग्य को उशीनर, मत्स्य, कुरु, पाञ्चाल एवं काशि विदेह में भ्रमण करते हुए पढ़ते हैं। वृहदारण्यकोपनिषद् ३.३.१ में मुज्यु लाट्यायनि याज्ञवल्क्य से कहते हैं कि वे तथा अन्य लोग अध्ययन के लिए भद्र देश में घूमते हुए थे या कि बहुत जगह घूमते रहे थे। शिष्यगण प्रायः एक ही गुरु के यहाँ रहते थे, किन्तु वे जिस प्रकार पानी ढ़लान की ओर अश्यमेव बह जाता है, उसी प्रकार विख्यात गुरुओं के यहाँ दौड़कर चले भी जाते थे।"

**यथापः प्रवतायन्ति तथा मासा अहर्जरम्।**
**एवं मा ब्रह्मचारिणो धातरायन्तु सर्वतः।।**[1]

अध्ययन के साथ ही साथ ब्राह्मण का कर्तव्य 'पढ़ाना' भी होता था। अध्यापन कार्य के लिए प्रार्थना करने पर जो मुकर जाता था वह विफल माना जाता था। जब सत्यकाम जाबाल ने अपने शिष्य उपकोसल को १२ वर्ष तक सेवा करने पर भी नहीं पढ़ाया तब उनकी स्त्री ने उनकी भर्त्सना की। [छान्दोग्योपनिषद् ४.१०.१-१२] प्रश्नोपनिषद् [६.१] लिखता है, जो गुरु अपना ज्ञान नहीं बाँटता वह सूख जाता है।

उस समय अध्ययन का साहित्य बहुत विशाल था। तैत्तिरीय ब्राह्मण ३.१०.११ के अनुसार, वेद अनन्त हैं। ऋग्वेद १०.७१.११ में संकेत मिलता है कि उस समय चार प्रमुख पुरोहित थे। १.

१. तैत्तिरीयोपनिषद्, १.४.३

होता २. अध्वर्यु ३. उद्गाता तथा ४. ब्रह्मा। शतपथ ब्राह्मण ११.५.७. ४-८ के अनुसार स्वाध्याय के अन्तर्गत ऋचाओं, यजुओं, सामों तथा अथर्वांगिरसों एवं इतिहास-पुराण-गाथाओं को गिना है। गोपथ ब्राह्मण २.१०, लिखता है- ये सभी वेद कल्प, रहस्य, ब्राह्मण, उपनिषद, इतिहास, अन्वाख्यान, पुराण, अनुशासन तथा वाकोवाक्य आदि के साथ उत्पन्न किए गए। छान्दोग्योपनिषद् ७.१.२ में नारद सनत्कुमार से कहते हैं-"उन्होंने चारों वेदों, पाँचवे वेद के रूप में इतिहास पुराण, वेदों के वेद व्याकरण, पित्र्य [कथनोपकथन या हेतुविद्या] एकायन [राजनीति], देवविद्या, निरुक्त, ब्रह्मविद्या [छन्द एवं ध्वनि-विद्या], भूत-विद्या [भूत-प्रेत को दूर करने की विद्या], क्षत्र विद्या [धनुर्वेद], नक्षत्र विद्या, सर्प-विद्या, देवजन विद्या [नाच, गान, अभ्यञ्जनादि] सीख ली थी।

तैत्तिरीयोपनिषद् [१.९] में स्वाध्याय [वेदाध्ययन] एव प्रवचन को तप कहा गया है। इन दोनों को ऋत, सत्य, तप, दम, शम, अग्नियों, अग्निहोत्र एवं संतान के साथ जोड़कर इनकी महत्ता को और भी बल दिया है और कहा है कि घर चले जाने पर भी विद्यार्थी को वेदाध्ययन नहीं छोड़ना चाहिए। वृहदारण्यकोपनिषद् ४.१-२ में आया है कि जब जनक ने याज्ञवल्क्य को एक सहस्र गाय, एक हाथी, एक बैल देना चाहा तो याज्ञवल्क्य ने कहा "मेरे पिता का मत था कि बिना पूरा पढ़ाये शिष्य से कोई पुरस्कार नहीं लेना चाहिए।"

ऋग्वेदकालीन शिक्षा पद्धति शुद्ध उच्चारण को विशेष महत्त्व देती है। 'ऋग्वेदभाष्य भूमिका' में 'शिक्षा' का लक्षण करते हुए आचार्य सायण लिखते हैं-

"स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा" अर्थात् स्वरों तथा वर्णों के उच्चारण प्रकार का उपदेश देने वाली 'शिक्षा' कहलाती है। वेदाङ्गों [शिक्षा, कल्प, निरुक्त, व्याकरण, ज्यौतिष तथा छन्द] की तरह वर्ण, स्वर, मात्रा, बल, साम तथा सन्तान के रूप में 'शिक्षा' के भी छः अंग हैं। [तै. १.२] यहाँ वर्ण से तात्पर्य अक्षरों से है। ऋग्वेद में उल्लिखित मंत्र का उल्लेख इसी भाव को व्यक्त करता है-

**"ऋचो अक्षरे परमे व्योमन्"**

उच्चारण में स्वरों का विशिष्ट महत्त्व था। महाभाष्य में इसका लक्षण "स्वयं राजन्ते इति स्वराः"[१] किया गया है। ऋग्वेद में 'वाक्'[२] के लिए स्वर शब्द का प्रयोग है। इनमें समाहित उदात्तादि धर्म भी स्वर हैं-

**उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः।**[३]

---

१. महाभाष्य १.२.२९

२. ऋग्वेद ८.७२.७ अधिस्वरे नि. १.११.३१

३. ऋक्प्रातिशाख्य ३.१

**उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः।**[१]

उदात्त को मुख्य स्वर माना जाता है। अपवाद को छोड़कर एक पद में उदात्त निश्चित होता है। उस काल में स्वरों का इतना महत्त्व था कि त्वष्टा के उच्चारण में स्वर की अशुद्धि हो जाने के कारण उसकी कृत्या साधना विपरीत फलदायिनी हो गई थी, जिससे यजमान [वृत्रासुर] की मृत्यु हो गई थी। महर्षि पतञ्जलि ने यहाँ संकेत किया है कि इन्द्रशत्रु शब्द में वृत्रासुर द्वारा "इन्द्रशत्रुर्वर्धस्व" मन्त्र के प्रयोग में **तत्पुरुष** या **बहुब्रीहि** समास होने पर दोनों के स्वर-प्रयोग में अन्तर आ जाता है। शत्रु शब्द यहाँ क्रिया पद है। शातयिता को शत्रु कहा जाता है, ऐसी स्थिति में बहुब्रीहि समास होने पर "इन्द्र है शातन अर्थात् दण्ड देने वाला जिसका" अर्थ होगा और तत्पुरुष समास होने पर "इन्द्र का शातयिता" ऐसा अर्थ होगा। इन समासों का यथार्थ ज्ञान मन्त्रोच्चारण में "शत्रु" शब्द के पाठ स्वर [उच्चारण स्वर] द्वारा ज्ञात होता है। गलत स्वर का प्रयोग करने से यहाँ समास भेद हो गया है उसी कारण अर्थभेद भी हो गया। अतः यज्ञकर्ता वृत्रासुर निज के ही अभिचार प्रयोग में अभीष्टार्थ बोधक वाले स्वर के स्थान पर भिन्न-भिन्न स्वर वाले पाठ-स्वर का प्रयोग करने से अभीप्सितार्थक फल का भागी न होकर मारा गया। महाभाष्य पस्पशाह्निक का श्लोक उदाहरणार्थ प्रस्तुत है-

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तः न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।**

(महाभाष्य पस्पशाह्निक)

इसके विपरीत यदि वही मन्त्र तत्पुरुष समास में प्रयुक्त किया गया होता तो उसका अर्थ होता 'इन्द्र का शातनकर्त्ता" अर्थात् वृत्रासुर और उसकी विजय, अर्थात् उसके उत्कर्ष का वर्धन होता।[२]

स्वरों के महत्त्व पर वेङ्कटमाधव ने कहा है "अन्धकार में प्रकाश लेकर चलनेवाला व्यक्ति जैसे कहीं भी गिरता नहीं वैसे ही स्वर की सहायता से किया गया अर्थ सन्देह रहित होता है। यथा-

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलितः क्वचित्।**
**एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति।।**[३]

जो मंत्र मात्र स्वर या वर्ण से हीन होगा वह मिथ्या प्रयुक्त होने के कारण अभीष्ट अर्थ का प्रतिपादन नहीं करेगा फलतः वही वाक् 'वज्र' बनकर यजमान का ही नाश करेगा। ऋग्वेद में भी अर्थ को समझे बिना शब्द मात्र का अध्ययन निन्दित माना गया है। यथा-

---

१. पाणिनीय शिक्षा ११

२. जर्नल आफ गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ अंक (३७) १९८१ हिन्दी संस्कृत खण्ड पृष्ठ ३७, आचार्य बलदेव उपाध्याय अभिनन्दन विशेषांक

३. स्वरानुक्रमणी-१.८

**"वाचं शुश्रूवा अफलामपुष्पाम्"**

याज्ञवल्क्य शिक्षा में भी स्वरों के महत्त्व पर प्रकाश डाला गया है। स्वर ही उदात्त अनुदात्त एव स्वरित होते हैं। "त्रैस्वर्य प्रक्रिया में स्वर प्रधान है और व्यञ्जन स्वरयुक्त होता है।"[१] स्वर के अतिशय महत्त्व को देखने से पता चलता है कि ऋग्वेद काल में उच्चारण काल, उनके प्रयत्न, स्थान तथा दोषरहित उच्चारण पर भी विशेष बल दिया जाता था। तैत्तिरीय उपनिषद् में इसका उल्लेख इस प्रकार मिलता है– "शिक्षां व्याख्यास्यामः, वर्ण मात्रा बलम् साम सन्तान इत्युक्तः" [शिक्षाध्याय १.२]

इस प्रकार वैदिक विद्यार्थी अत्यन्त शुद्ध उच्चारण, उचित शब्द प्रयोग एवं अत्यधिक अभ्यास के कारण केवल भारहारी स्थाणु मात्र ही नहीं है अपितु अर्थानुसन्धान के कारण शिक्षा के उदात्त अर्थों को चरितार्थ करते थे। व्याकरण के सुबद्ध नियमों के कारण परिष्कृत उच्चारण अपरिहार्य था क्योंकि उच्चारणभेद से भी अर्थभेद हो जाया करता था।

उपर्युक्त तथ्यों से हम इस निष्कर्ष पर पहुँचते हैं कि "वेदकालीन श्रुति शिक्षा अत्यन्त परिष्कृत बुद्धि के विद्यार्थियों को उत्पन्न करती थी।"

वैदिक शिक्षा 'श्रवण' और 'स्वाध्याय' इन दो विधियों में प्रचलित थी। श्रवण शिक्षा प्रणाली में मंत्रों के कण्ठस्थ करने की प्रक्रिया में मंत्रों के छन्दों, पदों, अक्षरों और ध्वनि के उच्चारण को समुचित रूप से स्पष्ट किया जाता था। श्रवण विधि की महत्ता को ध्यान में रखते हुए वैदिक महामनीषियों ने ग्रन्थों को लिपिबद्ध करना आवश्यक नहीं समझा क्योंकि लिपिबद्ध होने पर प्रमाद के कारण ग्रन्थों में पाठभेदादिक अशुद्धियों की सम्भावना प्रबल हो जाती, तब कथ्य अस्पष्ट हो जाता, जैसा की पश्चाद्वर्ती लिपिबद्ध ग्रन्थों के संदर्भ में देखा जाता है। इसीलिए वैदिक ऋषियों ने अनूठी शिक्षाविधियों का आविष्कार कर उन्हें अपनाया था। ये विधियाँ स्वरों और अक्षरक्रमों पर आश्रित होती थीं। इसीलिए 'श्रवण' विधि से सहस्रों वर्षों तक वेदों का अध्ययन होता रहा तथा ग्रन्थ के एक भी अक्षर में भेद नहीं हुआ। ऋग्वेद विश्व का एकमात्र ऐसा अनूठा ग्रन्थ है, जिसमें एकमात्रा का भी पाठ-भेद नहीं है। शिक्षा का कार्य विद्वान लोगों को बड़ी सावधानी से करना पड़ता था ताकि प्रत्येक विद्यार्थी गुरु द्वारा प्रदत्त 'ज्ञान' को समझ सके। इस संदर्भ में १०.७१.२ का मन्त्र मननीय है–

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि।।**

अर्थात् जैसे सूप [या छलनी] से सत्तू परिष्कृत किया जाता है वैसे ही बुद्धिमान लोग बुद्धिबल से परिष्कृत भाषा को प्रस्तुत करते हैं।

---

१. याज्ञवल्क्य शिक्षा-वर्ण प्रकरण २.२९

वैदिक विद्यालयों को होतृ-अध्वर्यु-उद्गातृ तथा ब्रह्मा इन चार शाखाओं में विभक्त कर दिया गया था। होतृ-विद्यार्थी पद्यात्मक ऋग्वेद का विशेष अध्ययन किया करते थे। अध्वर्यु गद्यात्मक यजुर्वेद का तथा उद्गातृ सामवेद का अध्ययन किया करते थे। उद्गातृ छात्रों की सुविधा के लिए सामवेद को पूर्वार्चिक तथा उत्तरार्चिक इन दो भागों में विभक्त किया गया था। इन्हीं होतृ आदि पुरोहितों द्वारा ही प्रातिशाख्य साहित्य का भी सृजन हुआ, जिसमें वैदिक शब्दों की व्युत्पत्ति, व्याकृति, स्वर तथा उच्चारण आदि का विस्तृत विवेचन किया जाता था।[१]

गुरुजन इस बात से भलीभाँति परिचित थे कि एक कक्षा के छात्रों की बौद्धिक क्षमताओं में पर्याप्त अन्तर होता है, इसीलिए ऋषि कहता है–

**अक्षण्वन्तः कर्णवन्तः सखायः मनोजवेष्वसमा बभूवुः।**
**आदध्नास उपकक्षास उ त्वे ह्रदां इव स्नात्वा उ त्वे ददृक्षे।।**[२]

अर्थात् जिन्हें आँखें हैं, कान हैं ऐसे सखा मन के भाव [ज्ञान] को प्रकाश करने में असाधारण होते हैं। कोई कोई उस तक जलवाले पुष्कर, कोई-२ कटि पर्यन्त जल वाले तड़ाग के समान होते हैं। तथा कोई-२ स्नान करने के उपयुक्त गम्भीर ह्रद के समान होते हैं। अर्थात् छात्रों की बौद्धिक सामर्थ्य में अन्तर विद्यमान था। सहपाठीगण अपने मित्र को सभा में विजय पाते हुए देखकर प्रसन्न होते थे। सामर्थ्य में अन्तर विद्यमान था। इस अन्तर को समझते हुए गुरुजनों ने आठ प्रकार से पाठ पढ़ाते तथा अभ्यास करवाते थे–

**जटा माला शिखा रेखा रथो दण्डो ध्वजो घनः।**
**अष्टौ विकृतयः प्रोक्ताः तत्त्वाख्याता महर्षिभिः।।**

अर्थात् जटा, माला, शिखा, रेखा, रथ, दण्ड, ध्वज तथा घन पाठों की व्यवस्था कराते थे। बारम्बार अभ्यास [वेदमन्त्रों] से छात्रों [अलग-अलग वैदिक क्षमता वाले] की बुद्धि में अनेक प्रकार से पैनापन आ जाता है। यही कारण है कि गुरुजन छात्रों की बुद्धि को विकसित करने के लिए वेदमंत्रों का अभ्यास आठ प्रकार से कराते हैं, जिन्हें अ**ष्टौ** विकृतय**:** कहा जाता है।

आचार्य उच्चारण अभ्यास में स्वरानुसार अंगुलि संकेतों या मुद्राओं का भी संकेत करते थे और उच्चारण की शुद्धि पर पूर्ण ध्यान करते थे। आर्यों की शिक्षा-प्रणाली का ब्रह्मचर्य आश्रम से अभिन्न सम्बन्ध था। ऋग्वेद में ब्रह्मचारी का स्पष्ट उल्लेख है–

**ब्रह्मचारी चरति वे...विषद्विषः सदेवानां भवत्येकमङ्गम्।।**[३]

अथर्ववेद में कहा गया है कि जो ब्रह्मचारी तपपूर्वक वेद का स्वाध्याय करता है वह विद्या

१. आदि और मध्ययुगीन भारत में शिक्षा [डा. सरयू प्रसाद चौबे पृ.-१९]

२. ऋ. १०.७१.७

३. ऋ. १०.१०९.५

